यदेकचित्तं विजयप्रयाणसमुज्जिहानं सदसि स्थितं त्वाम् ।
सुखं शयानं निशि जाग्रतं वा सन्तोषयंस्ते सविधं न मुञ्चे ॥ 89

जानामि भावं भवतो जहीहि विमर्शनं विद्धि शुभं करस्थम् ।
अवेहि रामायणसारकाव्यं निर्व्यूढमेवेति नृपालमौले ॥ 90

चतुरमधुरवाणीं सम्यगाकर्ण्य यस्याः
सदसि मधुरवाणीनाम दत्तं त्वयैव ।
सरसकृतिविधायां साधुमेधाविशेषा
स्वधिकपटुरशेषास्वम्बुजाक्षीषु सैषा ॥ 91

विद्यान्ववाये विहितावतारा सुशिक्षिताऽसौ विदुषा त्वयैव ।
विद्यापरीक्षासमये विशेषात्प्रकाशमानप्रतिभानुभावा ॥ 92

चातुर्यमेति कवितासु चतुर्विधासु वीणाकलाप्रकटने भवति प्रवीणा ।
प्रज्ञामयं निपुणमञ्चति पाणिनीये मेधां व्यनक्ति बहुधा विविधावधाने॥ 93

कर्तुं पटुः काव्यमियं स्वयं ते साहाय्यकं चेत् किमुतेति सद्यः ।
आवेद्य रामो ऽन्तरधात्प्रभाते पयोधिकाञ्च्याः पतिरित्यबोधि॥ 94

निधाय तच्चेतसि नैशवृत्तं रोमाञ्चतः कञ्चुकितप्रतीकः ।
कस्याश्चिदालम्ब्य करं नृपालो दान्तं स भद्रासनमध्यवात्सीत् ॥ 95

वेधा इवासौ विशदारविन्दे द्विषन्मुरो द्वीप इवावदाते ।
महेश्वरो रूप्यमहीभृतीव सिंहासने तत्र चिराद्व्यराजीत् ॥ 96

रघुप्रवीरस्य मुखं रसोल्लसन्मृदुस्मितं तन्मधुरा गिरश्चताः ।
दयाभिपूर्णान्यपि तान्यवेक्षणान्यनुस्मरन्नेष मनस्यवर्तत ॥ 97

प्रकृतिमधुरकाव्यप्रौढसन्दर्भविद्भि-
र्युवतिजनमणीभिर्युक्तपार्श्वद्वयोऽसौ ।
अथ सविधमुपेतां सौहृदादाह्वयन्मा-
मवनिपरिवृढानामग्रणीरित्यभाणीत् ॥ 98

सुमुखि मयि शयाने स्वप्नदृष्टो रजन्यां
रघुपतिरनुयातो मैथिलीलक्ष्मणाभ्याम्।
वदतु मधुरवाणी मच्चरित्रप्रबन्धं
शुभकरमिति सोऽयं वत्सलत्वादवादीत् ॥ 99

अजहृदलङ्कृतिक्रममनेकरसोल्लसितं
सरसपदार्थसङ्गति समग्रगुणानुगुणम् ।
रघुरमणप्रबन्धतिलकं रसिकाभिमतं
सुदति विधीयतामिति सुधीरगदीन्नृपतिः ॥ 100

अहमप्यधिपं तमभ्यवोचं यदि रामः स्मृतिमाननुग्रहीता ।
स भवान् सकलप्रबन्धकर्ता सहकृत्वा यदि सिद्धमेव काव्यम् ॥ 101
अभिनव मणिहारं ...... ......................
............हीरप्रकल्पितमङ्गदम्।......
....... ...............................
....... .................... ............... ॥ 102

:

(इतः मूलग्रन्थे पत्रस्यैकस्य लोपात् ग्रन्थपातः,यत्र प्रथमसर्गसमाप्तिः सम्भाव्यते)



# श्रीरामायणसारकाव्यतिलकम्

## द्वितीयः सर्गः

वल्मीकभूर्वाक्यविदां वरिष्ठं व्रती तपःस्वाध्ययनप्रतीतम् ।
पप्रच्छ पद्मप्रभवस्य पुत्रं पुरस्सरं पूर्वतपोधनानाम् ॥ 1

को वाऽत्र लोके कुशलो यशस्वी दाता दयावान्[1] दलितारिवीरः ।
दृढव्रतो दीप्तियुतोऽधुना तं वीणामुने विस्तरतो वद त्वम् ॥ 2

इत्थं[2] मुनेरीरयतो विनीत्या वल्मीकजातस्य वचो निशम्य ।
स नारदः सर्वगुणान् रघूणां पत्युस्तदानीमुदयुङ्क्त वक्तुम् ॥ 3

रामोऽभिरामो रघुवंशनेता
प्रतीतनीतिः[3] प्रतिभानशाली ।
स्मितोज्ज्वला (लं) कृतिमान् गभीरो
वीर्योत्सु (कोऽसौ) विपुलोन्नतांसः॥ 4

आजानुबाहुः स्वजनस्य गोप्ता राजाधिराजो रविकोटितेजाः ।
अपारचापागमपारदृश्वा विश्वा (तिशायी कम)नीयमूर्तिः ॥ 5

पूर्णा (तमतास) र्वगुणैरुपेतः पती रघुणां जयति प्रतीतः ।
तस्यैव चित्रं चरितं पवित्रं वल्मीकजन्मन् वद साधु काव्ये ॥ 6

प्राचेतसस्तस्य गुणान् प्रशस्ताननुस्मरन्नेव सशिष्यवर्गः ।
स्नातुं ययौ स्फीतमसावृषीन्द्रस्तमः क्षिपन्तीं तमसास्रवन्तीम् ॥ 7

---

1 दलितातिं 2 इष्टं 3 प्रतीति

तस्याः प्रतीरे शबरेण विद्धं क्रौञ्चद्वये वीक्षितुरेकमस्य ।
मुखान्मुनेः कारुणिकस्य वाणी छन्दोमया काऽप्युदभूदपूर्वा ॥ 8

अनन्तरं तत्र स पारिकांक्षी समाप्य कृत्यं समयानुरूपम् ।
निरूढवेदान्तविचारकीरं निजाश्रमं निर्मलमाससाद ॥ 9

अथाङ्गभासा तटितां विलासान् पयोदमार्गं परितः प्रकाश्य ।
निध्यायतां निर्ममशेखराणां प्रवर्तयन् पूर्वभराश्रुवर्षम् ॥ 10

पार्श्वापतन्नारदशारदाभ्रसन्दर्शनानन्दरसेन हासी ।
आयाति वेगान्मुदमेत्य नेत्रैरष्टाभिराशाधिभुवोऽनुगृह्णन् ॥ 11

आख्याति शब्दे जयजीवशब्दं प्राधान्यमुद्गायति वेदशीर्षे ।
आगच्छतामभ्रसदां विमर्दं शिक्षोदिते शासति वीक्ष्य हृष्यन् ॥ 12

तत्रोपयातां स्वत एव वाणीमुन्मेषयिष्यन् किल भूतले ताम् ।
संविन्मणिर्जङ्गमरत्नसानुराम्नायभूराविरभूत् स्वयम्भूः ॥ 13

शीताचलो जन्मगृहं भवान्याः श्रियः पयोधिर्वचसां सवित्र्याः ।
वल्मीकभूवक्त्रमभूदिदानीमित्येष चित्ते मुमुदे विधाता ॥ 14

अथो विनीतेन यथोक्तमेव प्राचेतसेन प्रणतेन तेन ।
संपूज्यमानो जलजातजन्मा वाणीं सुधासारनिभामभाणीत् ॥ 15

प्रेम्णा मयि प्रेषयति प्रसन्ना वाचोऽधिदेवी वदनं त्वदीयम् ।
पद्यात्मना प्राविश (दद्य ह) षं प्राचेतसाऽऽकल्पय चेतसा त्वम् ॥ 16

वल्मीकजन्मन् मम वाक्यमेतदाकर्ण्य पुण्यं सुधियां शरण्यम् ।
रामस्य वृत्तं रचयस्व तत्तद्वृत्तान्वितं काव्यमतीव भव्यम् ॥ 17

मम प्रसादान्मनुवंशकेतोर्वृत्तं प्रशस्तं सकलं तवाद्य ।
जायेत हस्तामलकेन तुल्यमिति ब्रुवन्नन्तरधाद्विधाता ।। 18

ततः परं तस्य विधेर्निदेशा द्राज्याभिषिक्तस्य रघूद्वहस्य ।
चकार काव्यं चरितं समस्तं वल्मीकभूरात्मवतां वतंसः ।। 19

रामस्य तत्तच्चरितं समस्तं प्रबन्धरूपं परिकल्प्य हृद्यम् ।
गातुं पुमान् कः प्रभवेत्तदित्थं तस्मिन्मुनौ ध्यानवशे तदानीम् ।। 20

भुवं प्रपन्नाविव पुष्पवन्तौ कुशो लवश्चेति कुशाग्रबुद्धी ।
उपागतौ तूर्णमुभौ कुमारौ स्वाद्वींरसस्वादिमवादिकण्ठौ ।। 21

एतौ विनीतौ परिलाल्य मौनी रामायणं सर्वरसोत्तरङ्गम् ।
अध्यापयामास समाससन्धिविभक्तिभावार्थविवेकपूर्वम् ।। 22

तत्कीर्तितां रामकथां बुधाली सुधामिवास्वाद्य मुदं दधाना ।
शुभोत्तरस्तोत्रवचस्सुवर्णै रेतौ कुमारौ मुहुरभ्यषिञ्चत् ।। 23

इक्ष्वाकुमूर्धन्य (कथां वद) न्तौ प्राप्तावयोध्यां प्रमदात्कदाचित् ।
जगन्मनोज्ञं जगतः कवीनां सभासु वीथीषु चतुष्पथेषु ।। 24

एतौ कुमारौ भरतेन यु......तथा.....................ताम् ।
...भ्रामणि..........सभां स भानु कुलावत..........कादनैषीत् ।। 25

तौ......ल्वि.............प्रश्रयिणौ निषण्णौ ।
गन्धर्वडिम्भाविव तस्य कीर्तिगाथां तदा गातुमथारभेताम् ।। 26

तौ वल्लकीमङ्कतले निधाय श्रुतिप्रमाणस्फुरितप्रधानम् ।
तन्त्रीस्समं तन्मृदु [1]वादयन्तौ आलोकयामासतुरैककण्ठ्यम् । 27

1. हारयन्तौ

ग्रामद्वये दीव्यति भूतधात्र्यां प्रशस्यमाने सुरभौ च जातौ ।
रसग्रहांशान्तरमार्गलक्ष्म्या तालेषु नैकाङ्गकलोन्नतेषु ।। 28

विवादिनं तं परिमृद्य वादिसंवादिनामप्यनुवादिनं च ।
प्रकाश्य तालस्फुरितादिहृद्यं स्थायिक्रमेणापि विचित्रवृत्ति ।। 29

उत्कर्षधन्यर्षभलालनीयमुद्यत्सुधोन्मेषविशेषधन्यम् ।
विशुध्दभास्वत्समपातिभावं नाट्यं पटुत्वं बहु नाटयन्तौ ।। 30

रागेण तेन प्रथितेन ठायगींतप्रबन्धान् बहु वादयित्वा ।
परं विदूरीकृतपञ्चमोद्यत्प्रसक्ति गौलस्फुरणं प्रकाश्य ।। 31

तथैव तादृङ्महितप्रकर्षं वरालिरागोल्लसनं सृजन्तौ ।
व्यङ्क्तः स्म सामन्तमुखारिपालिजयन्ति[1]नीनादिषु चतुरीं तौ ।। 32

पुण्ड्रेक्षुसारानिव पोषयन्तौ द्राक्षाप्रकारानिव दर्शयन्तौ ।
हिमांशुचारानिव चारयन्तौ कर्पूरवारानिव कल्पयन्तौ ।। 33

अमू समापादितमन्द्रमध्यतारस्वरं रागरसानुसारि ।
संक्षेपरामायणमत्युदारमगायतां सम्यगमूढकम्पम् ।। 34

तदा तदाकर्ण्य सदस्सदस्ते शिरःप्रकम्पं चिरमाचरन्तः ।
अमन्द्रमध्यस्वरयोगमुच्चैः संत्यक्तरागा नुनुवः समन्तात् ।। 35

नादप्रियौ तुम्बुरुनारदौ वा हाहाश्च हूहूश्च समागतौ वा ।
एतौ हि विद्याधरकिन्नरौ वेत्यार्याः सभायां पुनरप्यशंसन् ।। 36

श्रुत्वा तदीयां श्रुतिसौख्यदोग्ध्रीं सङ्गीतभङ्गीं सुमनोमनोज्ञाम् ।
पुरा सुधोत्थापनसंविधाने यं प्राप हर्षं तमवाप रामः ।। 37

1. नि

वीक्ष्य प्रियं ता (दृगमू) [1]नयन् ता वमात्यवृद्धा मुनिपुङ्गवाश्च ।
बाल्ये यथाऽऽभादधिपो रघूणां भातस्तथैताविति वह्वशंसुः ।। 38

उद्गायतं रामकथामुदारां युवां नवां विस्तरतोऽधुनेति ।
अमू वसिष्ठप्रमूखैरशेषैराज्ञापितौ गानरतावभूताम् ।। 39

कल्याणमाणिक्यखनी रघूणां कुलास्पदं कोसलदेशभूषा ।
हृद्या पयोध्यादरणीयखेया विभात्ययोध्या विमतैरयोध्या ।। 40

विलोक्य यस्यां विधुतान्तकान्तप्रासादभासा [2]विशदान् पयोदान् ।
मुदं लभन्ते मुहुरभ्रसिन्धुतरङ्गडोलातरला मरालाः ।। 41

ध्वजावधूतद्युनदीसुवर्णसरोजपांसुच्छुरिता यदीयाः ।
सौधास्सदा शीतकलानुषङ्गाद्विभान्ति [3]हारिद्रनदीवृताः किम् 42

सूर्यागमे यन्नवरत्नसौधो गानाद्द्रवधूनां द्रवतां मणीनाम् ।
अर्घ्यं ददात्यम्बुभरेण तस्मै सन्मार्गभाजां सरणी किलेयम् ।। 43

छेकैणडिम्भप्रतिबिम्बवद्भिः सौधाञ्चलस्थायिभिरात्मदर्शैः ।
मृगाङ्कबिम्बं मिलितं [4]मृगाक्ष्यो याथार्थ्यतो नैव विदन्ति [5]यस्याम् । 44

रत्नांशुचन्द्रद्रवदिन्दुकान्ततोयध्वजाग्रानिलधूपधूमैः ।
सम्पाद्य मेघान्नटयन्ति [6]नार्यो यस्यामतीताभ्रपथा मयूरान् ।। 45

प्रसारमाणिक्यमणीषु सिन्धुशोणाम्बुजानां छुरितारशोभि ।
स्विन्ना मरन्दश्रमयन्ति यस्या ............हैर्नियोद्धम् ।। 46

शिखात्ततो ......चन्द्रप्रभूतामृतचन्दनाद्राः ।
प्रकाशय... ...ता निशासु विलासिवद्यत्र विभान्ति सौधाः ।। 47

---

1. हृत्रणयन्ता. 2. विशदान्ययोधान्. ३. व-रिद्रपदीवृताः 4मृगाक्ष्याः 5. यस्याः ।
6. यस्या ।

प्राप्ते स्वपार्श्वं बहुलोत्थकार्श्ये कलानिधौ यत्कलधौतसौधाः ।
पुष्णन्ति तं पूर्णवसुप्रदानादौदार्यभाजामयमेव पन्थाः ।। 48

यद्भर्महर्म्यान्तरकेलिकान्तकान्ताजनक्लान्तिभरं हरन्ति ।
समीरणाः सारवकैरवाम्बुजातोन्मिषत्सौरभसारभव्याः ।। 49

अहर्निशं विष्णुपदाश्रयात्किं ततःप्रभूतां तटिनीं निजेन ।
सालो गरीयानुपलाल्य मूर्ध्ना पादेन यस्यां बलिसद्म रुन्धे ।। 50

नीलोज्ज्वलात्मा [1]वरणो यदीयः स मुख्यवृद्धया किमु वारणस्सन्
पाकारिसालान् प्रकटाग्निसीम्ना कषत्युडूनां कपटेन [2]पद्मी ।। 51

अस्यामुदेष्यामि भुवीति यस्या [3]गुप्त्यै पुरैव प्रहितं नु चक्रम् ।
[4]सुपर्णवाहेन सुवर्णसालः स्यादत्र नो चेत् किमु सारलक्ष्मीः ।। 52

पद्माकरत्वं वरणो भजन्त्या यस्या वरीयान् वरणः समिन्धे ।
द्रुमा [5]भवन्त्यम्बुधरास्तदग्र[6]स्थलस्थितास्तत्पिहिताः प्रवालाः ।। 53

अतैलदीपा रजनीषु भान्ति ज्योतिर्गणा यद्वरणाग्रभागे
धण्टारवो यामिकपाणिघण्टानादो भवत्यभ्रमुनायकस्य ।। 54

सेतुं विधातुं हरते पुराद्रि···क्या···द्वाश्रयपूर्वमेव ।
आहार्यचक्रं वरणो यदीयः कनत्यतोऽस्मिन् घनगैरिकश्रीः ।। 55

शाटी विनीला यदुदग्रसालकेतुं श्रिता[7]केतुमतिं विधाय ।
ग्रहाधिनाथस्य करोति भीतिं अयं क्रमः कैतववृत्तिभाजाम् ।। 56

अक्षोभ्यतामेति महाबलेनाप्याप्नोति तारप्रसवान्निशायाम् ।
भास्वत्फलं याति दिवा तनोति सालोऽद्भुतो यत्र मुदं नवीनाम् ।। 57

---

1. वरणा. 2. पद्मि. 3. गुप्तै पुरेव 4. सुवर्णवाहेन. 5. भवन्त्यः बुध्ररा. 6. स्थल स्थिताःतत्तपितः 7. केतमतीं ।

उपेत्य यत्तोरण[1] नूत्नरत्नै [2]रत्नाकरत्वं प्रतिबिम्बवद्भिः ।
खेयं पयोलक्ष्यहिरण्यसालमूर्त्या बिभर्तीव हिरण्यनाभम् ॥ 58

आशोषयिष्यत्यधिपो रघूणामात्मानमस्त्रैरिति सान्त्वनाय ।
प्रागागतो यत्परिखैव सिन्धुर्यन्नागसंक्रीडनहेतुरास्ते ॥ 59

रवेस्सुतां रामहलाग्रभग्नां भागीरथीं निर्ममकर्णलग्नाम् ।
तद्वल्लभं कुम्भजहस्तमग्नं खेयं यदीयं हसतीव फेनैः ॥ 60

पत्युः श्रिया[3] चित्तमिव प्रसन्नं समन्वितं चित्तविजृम्भितेन ।
यदीयखेयं कमलानुषक्तं[4] सूतेऽन्वहं फेननिभेन भेनम् ॥ 61

बर्हिर्निवेश्योर्मिमहातुरङ्गाननाविलो यत्परिखाम्बुगुम्फः ।
अज्ञातमाक्रामति भोगिलोकं गम्भीरवृत्तेः पदवी किलेयम् ॥ 62

मतङ्गजस्यात्मकुलोद्वहस्य[5] मानं व्यतानीन्मकरः पुरेति ।
खेयस्य यस्यां मकरालयस्य किरन्ति तोयानि करैः करीन्द्राः ॥ 63

सीमन्तरेखेव भुवः समिन्धे रथ्या यदीयाऽञ्चति तत्र सक्तः ।
सिन्दूरलक्ष्मीस्तपनाश्वरिङ्खासंघट्टनाष्टापदसौधरेणुः ॥ 64

पतद्रजस्तोरणपद्मसक्तेर्यद्वीथिसंचारकृतां वधूनाम् ।
पदोः कियन्मार्दवमित्यवैतुं प्रायस्तयैव प्रहितं विभाति । 65

सतोरणालोल सरोज दृष्टेर्गेहावलेः काञ्चनदेहलीन्ताम् ।
दृष्ट्वा जनो यत्र मुधा निधातुमन्यत्पदं कामयते न चित्ते ॥ 66

राशीकृतैर्यत्र महापणेषु कर्पूरकश्मीरजगन्धसारैः ।
उर्वी तदुज्जृम्भितवासनाभिर्वसुन्धरा[6] गन्धवतीव भाति ॥ 67

---

I. नूत्नरत्ने 2. रत्नाकरत्वं 3. श्रियं 4. सूतेऽन्वयं 5. मानं 6. गन्धवतीव भाति।

चाम्पेयमाल्ये सरसे पिधाय कूर्पासतः कौसुमकन्दुकौ च ।
अन्यां (श्च) किं दर्शयसीति यस्यां प्रसूनलावी त्रपते विटोक्त्या ॥ 68

सुमालिकायै[1] सुमविक्रयिण्यै वर्णातिरिक्तां वसुमालिकाह्वाम् ।
ददाति यस्यां तरुणोऽनुरागात् पश्यन्ति नार्थं प्रणये युवानः ॥ 69

गन्धापणे यत्तरुणीप्रणीताः [2]क्रीताः प्रमोदात्पटवास[3] धूल्यः ।
आलिम्पतां नो परमाम्बराणि वामार्धजानेरपि वासयन्ति ॥ 70

परीक्षितुं पक्ष्मणि यद्विपण्यां तन्व्यां सिताभ्रं तरुणोऽर्पयन्त्याम् ।
तत्पाणियोगप्रमदाश्रुपूरं निगूहते तन्महिमोक्तिदम्भात् ॥ 71

पदक्रमोन्मेषमुदञ्चयन्तः सदोन्नताः स्थापितयागतन्त्राः ।
याच्ञानभिज्ञात्मकरा यदीया विप्रोत्तमा वामनमाक्षिपन्ति ।। 72

धूमेषु यद्विप्रमखप्रभूतेष्वागच्छतो जम्भजितोऽभ्रवाहान् ।
पुष्यत्सु ते पुष्टिमुपेत्य नित्यं अमुं हविस्तुन्दिलमुद्वहन्ति ॥ 73

सर्वज्ञता हस्ततलाग्निमत्ता शक्तिप्रसक्तिश्च जटाभिरूप्यम् ।
वसन्ति यत्र द्विजराजमौलिष्वलीकदृष्टिर्न तथाप्युदेति ॥ 74

व्याप्ते यदीयद्विजयज्ञधूमे हविर्ग्रहीतुं हरिदीश्वरेषु ।
आयत्सुवह्निर्व्यजनात् समीरः स्वचारतो न भ्रमतोऽभ्रमार्गे ॥ 75

सयज्ञतन्त्राश्च नयज्ञतन्त्रा मितोक्तिकान्ता नमितोक्तिकान्ताः ।
वराजमाना नवराजमाना विप्राः प्रशस्या विलसन्ति यस्याम् ॥ 76

हृष्टा यदीया हृदि पौण्डरीकस्फूर्तिप्रसक्तौ शुचयो द्विजेन्द्राः ।
आकारणान्नारचयन्ति किं वा प्रायो मरालीपरितोषपोषम् ॥ 77

1. सुमविक्रयिण्या 2. क्रीता 3. धूल्याम् ।

शिष्टो वसिष्ठो वसति द्विजेषु तत्सन्निभा यत्र धरामराश्च ।
अभीप्सितप्रापणतो रघूणामनारतं शक्तिगुरुत्वलाभात् ।। 78

उर्वीपतीनामुदितेषु यस्यां शश्वद्यशश्शारदनीरदेषु ।
अस्ति प्रसादो निखिलाशयानामास्ते न कुत्राति च पङ्कवार्ता ।। 79

सहस्रधा शत्रुविलासिनीनां नेत्रेषु निर्मातुमिवाम्बुवर्षम् ।
गृह्णाति तद्वीररसं समग्रमह्नां पतिर्यन्नृपतिप्रतापः ।। 80

उद्दामशौर्या युधि बाहुजाता यस्यां जयश्रीपरिरम्भशीलाः ।
चक्रं सदा बिभ्रति सत्वयुक्ताः कार्यं कथं पातु गुणं जहातु ।। 81

सर्वत्र यत्पार्थिवकीर्तिदीप्तिसारे समुन्मीलति वैणिकर्षिः ।
ह्रिया पिधत्ते व पुरैणकृत्त्या गङ्गावचूडोऽपि गजाजिनेन ।। 82

दिवा प्रदीपे द्युमणौ स्वभासा निशि क्वचित् त्रासवशान्निलीने ।
भूषायते भूनभसोर्य[1]दीयमणीनिकायो विपणीमनोज्ञः ।। 83

निर्मन्थनेनादित[2] नीरसारं श्रीशाय[3] रत्नं जलधिः कियान् सः ।
इत्यूरुजा यत्र मणीन् गुणाढ्यान् दत्वेश्वरेभ्यो दधतेऽर्थवत्त्वम् ।। 84

पुञ्जीकृतान् यत्र वणिग्भिरर्थान् द्रष्टुं विमानैश्चरतोऽतिसंख्यान् ।
तदीयकोटिध्वजकोटिवाताः श्रीदं विना विश्रमयन्ति देवान् ।। 85

वर्णाय यद्वैश्यवरैः कषद्भिश्चन्द्रं ध्वजाः[4] कोटिकृते निबद्धाः ।
स्वयं च चन्द्रं सततं कषन्ति सम्बन्धजाः सन्ति गुणा न किं वा ।। 86

विशालताविष्करणेन नित्यं विशोभितो[5] यद्विपणीपयोधिः ।
समेत्य मध्येऽधिकतां वणिग्भिः सिताः प्रणीताः सिकता भवन्ति ।। 87

1. यंडर्य 2. दिक 3. श्रीशायिरत्नं 4. कोपिकृते 5. विशोभिनो ।

शूद्रा[1] द्विजेन्द्राध्वरतन्त्रहूतवलारिवाहेषु वलाहकेषु ।
वर्षत्सु यस्यां प्रथमानसस्याः संतन्वते सर्वजनोपकारम् । 88

अमर्त्यमर्त्योत्सवदानशक्ता यत्सैरिकाभ्रंकषधान्यकूटाः ।
सुधां हसन्त्यम्बरचारधुर्यसूर्याश्ववक्त्रस्रुतफेनदम्भात् ॥ 89

बलाहृता[2] दित्यभवाप्रवाहः स्वगोपतिः[3] कश्मलचेलधारी ।
अजायताग्रा[4] सपरोभुवीति हसन्ति शूद्रा हलिनं यदीयाः ॥ 90

करे निजाङ्गं दधतो मुरारेः साम्यं भजन्ति स्वरुचाम्बुवाहाः ।
इतीव घण्टारुतिभिः[5] प्रतर्ज्य धुन्वन्ति तान्यत्र रथा ध्वजाग्रैः ॥ 91

स्वसाम्यदृप्तानवलम्बचारिविमानराजीशरणस्य मेरोः ।
तटान् विभिन्दन्ति हठाद्यदीयरथा रथाङ्गोत्कटचित्क्रियाभिः 92

यस्या जयस्याजहदाप्तिहेतुमाना विमाना विरताभ्यसूयाः ।
भूपालिभूपालिकृताधिरोहा रथ्यासु रथ्या सुतरां विभाति ॥ 93

ईशः स्वमूर्ति दनुजं न्यक्रन्तदितीव धुलीनिकरैः करैश्च ।
आच्छादयन्त्यस्य कचं यदीयाः संक्षोभयन्ते शरधिं मदेभाः ॥ 94

नदन्ति मेघा इव मेचकाङ्गा नुदन्ति शत्रुद्विरदान् मदेन ।
वदन्ति शौर्यं जयवाद्यशब्दैर्यदन्तिके दन्तिघटा निबद्धाः ॥ 95

अवग्रहे सत्यपि वक्त्रदेशे मदावला भूरिमदाम्बुवृष्टया ।
पुष्यन्ति यत्रात्मयशोऽङ्कुरौघान् नैतादृशः किं महतां प्रभावः ॥ 96

कल्पद्रुमा यत्करिणां कपोलकाषेण विज्ञातबला विदित्वा ।
सगर्भ्यनागापजयं स्वलग्नमदापदेशान्मलिना भवन्ति ॥ 97

---

1, द्विजेन्द्वा द्वर 2. वालाहृता 3. कश्चलचेलधारि 4. अजायताग्रासवरो 5. पतर्ज्य

यद्वाजिनां वेगमपक्षतीनां तार्क्ष्यः किमेक्ष्य त्रपयातिमात्रम् ।
छदावृताङ्गो[1] धवलाननोऽन्तः संख्याति नो वज्रिकृतावमानम् ॥ 98

निजेशभोगाधरितं महेन्द्रं दधानमात्मीयरयान्निलीनम् ।
महाबिले क्वापि यदीयवाहा हेषाभिरुच्चैःश्रवसं हसन्ति ॥ 99

एकेन लूना हरिणैव गर्भे स्थिता रुदित्वा मरुतोऽपि सप्त ।
समाः किमित्याननफेनतस्तान् हसन्ति यस्यां हरयो रयाढ्याः ॥ 100

खगेश्वरस्य क्रमणानुकूलमाच्छाद्य पादोत्थरजोभिरभ्रम् ।
नागांश्च तन्नर्मगृहान् यदीया जयन्ति दृप्ता जवना स्तुरङ्गाः ॥ 101

चरन्ति नैस्त्रिंशिकचर्मिधन्वियाष्टीकशाक्तीकगणा यदीयाः ।
जयाङ्कघण्टास्वनितैर्दिगन्तभटाग्रणीभर्त्सनमाचरन्तः ॥ 102

योधा यदीयाः करवालवालाद्भयंकरा भद्रगजा इवाग्रे ।
पिष्टातधूलीपिहितप्रतीका गण्डस्रुतस्वेदमदाश्चरन्ति ॥ 103

वह्निं स्वतेजोभरलेशचोरं बलाद्गृहीत्वा किल दर्शयन्तः ।
यत्राग्रघण्टारवघोषपूर्वं दीव्यन्ति योधा दिनदीपलक्ष्म्या ॥ 104

चन्द्रानना यत्र कुरङ्नेत्राः पद्मांघ्रयो हंसगता लतांग्यः ।
गुच्छस्तना[2] लेखिपदावलग्ना विभान्ति[3] मेघावलिरोमरेखाः ॥ 105

मुक्ताललाटाभरणातपत्रा [4]च्चलाचलाक्ष्यश्चलचामराभ्याम् ।
प्रकाशयन्त्यः स्मरराजचिह्नं केषां न तोषाय यदीययोषाः ॥ 106

कुम्भीन्द्रकुम्भेन कुचौ विधाय यत्सुभ्रुवां तत्र विधिर्न्यधत्त ।
लक्ष्मीं ततो बाहुनिभेन पार्श्वे तां सोदरां कल्पलते भजेते ॥ 107

---

1. छन्दावृताङ्गो २. लेखिवदाव 3. मोघावलि 4. च्चलाचलाक्ष्यं चलरामराभ्याम्।

यद्देशवाटी मलयाद्रिकोटीचरद्रथप्राभवरत्नपेटी ।
पारावतारावतरङ्गिताशं नैकश्रिया लोलयते विटङ्कम् ।। 108

उक्त्या वदान्यानुपलालनेन धन्यान् विनीत्या धरणीतलेन्द्रान् ।
अपाङ्गपातैरपि षिड्गवर्गान् वेशाङ्गना यत्र विमोहयन्ति ।। 109

कचत्विषो लोचनकान्तयश्च पश्चात्पुरो यत्र तमः प्रकल्प्य ।
कुर्वन्ति हर्षं कुलटाजनानां स्वका न किं वा समये सहायाः ।। 110

निरन्तरोद्यन्निजकायकान्त्या विद्युद्वितानैर्विहितैस्समन्तात् ।
कुण्ठीकृताक्षेषु जनेषु यस्यां कुतोऽप्यभीताः कुलटाश्चरन्ति ।। 111

तोत्रायिता दुष्कृतकुञ्जराणां कूटायिताः पुण्यकुलाचलानाम् ।
शाखायिताः प्राक्तनवाक्तरूणां यज्ञार्पिता यत्र विभान्ति यूपाः ।। 112

[1]आच्छादयत्सु द्युमणिं द्रुमेषु यस्यां[2] चरन्त्यास्तिमिरावृतायाम् ।
चैत्रश्रियो जाग्रति चम्पकानि करप्रदीपा इव (केलि) वन्याम् ।। 113

यद्वप्रे पुण्ड्रकाण्डं भुवनचयविधोद्दण्डकोदण्डमेतत्
पर्वोत्थां वृत्तमुक्ताफलततिममलां चात्मवित्तं विदित्वा ।
तत्सन्त्राणाय सूनायुधजनपतिना तोषतः प्रेषिताः किं
निस्तन्द्रास्तत्र रत्याः प्रणयसवयसः शालिगोप्यश्चरन्ति ।। 114

मध्ये मौक्तिकमालिकाविलसनं माध्वीरसास्वादना-
निष्पन्दै[3] रभितो मिलिन्दनिकरैर्नीलाश्मनां च श्रियम् ।
प्राप्तानि प्रभवत्परागपटलीचित्राणि यत्रानिशं
पद्माया हृदयङ्गमानि दधते सद्मानि पद्माकराः ।। 115

1. आपादयत्सु 2. यस्याश्चरन्त्याः 3. निस्पन्दैरभितः ।

भूमीर्बहिर्मुखमखहविर्भागभोगाय दूरा-
दायातानाममरसदसामन्तरङ्गेषु यस्याम् ।
सान्द्रानन्दं दधति सरयूतीरभूनारिकेली-
पालीपालीपरिमलधुराबन्धुरा गन्धवाहाः ॥ 116

ख्यातश्रीरघुनाथनायकदयाधारानुवारोन्मिष-
द्वीणावादनसंस्कृतान्ध्रकवितासाम्राज्यलक्ष्मीजुषा ।
देव्योद्य (न्मतिसख्यया मधुरवाण्यम्बाख्यया निर्मिते
श्रीरामायणसारकाव्यतिलके सर्गो द्वितीयोऽभवत् ॥ 117

( इतोऽग्रिममेकं पत्रं मूलप्रतौ लुप्तम्; यस्मिन् द्वितीयसर्गान्त्य-
पुष्पिकायाः तृतीयसर्गादिमभागस्य च स्थितिरभ्यूह्यते )



# श्रीरामायणसारकाव्यतिलके

## तृतीयः सर्गः

( मूलप्रतौ पत्रस्यैकस्य लोपादेतस्य सर्गस्यादिमा द्वादश श्लोका लुप्ताः )

....................वशशताङ्गं बहुचक्रव्यतिषङ्गभासमानम्।
अतिचित्रमुदारधीररक्षीत् स शिवस्यन्दनमेकचक्रमेव ।। 13

भुवि कोसलकेकयेन्द्रकन्ये मगधाधीशसुनाऽत्र माननीयाः ।
[1]प्रथिताङ्गलताप्रकाशिनीस्ता पटुशक्तीरिव सैष पर्यगृह्णात् ।। 14

विनयाद्विजयार्थसाधकौ द्वावपि सिद्धार्थसुमन्त्रमन्त्रपालाः ।
तमशोकजयन्तदृष्टयस्ते दिविजज्येष्ठमिवाभजन् दिगीशाः ।। 15

महितैर्विनयेन मन्त्रिवर्यैः सहितोऽष्टाभिरसौ सुमन्त्रमुख्यैः ।
विरराज वसुन्धराबिडौजाः विहसन् वासवमेकमन्त्रिभाजम् ।। 16

वसुधाबलशासनस्य वश्यौ वशिनौ तस्य वसिष्ठवामदेवौ ।
ऋजुभावयुतस्य ऋत्विजौ द्वौ नयसाराविव सम्मतावभूताम् ।। 17

गुरुरद्रिभिदो यथा पृथिव्याः कमितुस्तस्य वसिष्ठपारिकांक्षी ।
स बभूव [2]तपस्समेधमेधाः [3]जितवेधाःप्रयतस्तथा पुरोधाः ।। 18

धरणीपरिणीस्ततः कदाचित्सुमतिं वीक्ष्य सुमन्त्रमाचचक्षे ।
अनपत्यमिदं न शोभते मत्कुलमत्रासुरभीव कर्णिकारम् ।। 19

1. प्रथितङ्गलका 2. तयोस्समेध 3. जितमेधाः ।

 

कुटिलासितकुन्तलाभिरामं निटिलालम्बिललन्तिकाललामम् ।
उदयद्रदनं कदा नु सूनोर्मुखमीक्षे मुहुरुज्जिहानहासम् ।। 20

स्मितचन्द्रिकया तमो नुदन्तं मृदुपादेन सुतं मुहुश्चरन्तम् ।
उदयन्तमिवाप्तमुत्पलानामुपदां लोचनयोः कदा विधास्ये ।। 21

सुतवक्त्रमुपाहिताङ्गुलीकं सुतलालं तरुणारुणांशुयोगात् ।
अरविन्दमिव स्रवन्मरन्दं किमुदीक्ष्ये कृतकज्जलाङ्कभृङ्गम् ।। 22

तनयं विनिवेश्य डोलिकायां मधुरं गानकृतां वधूजनानाम् ।
शुभनादसुधारसानुभूतिर्भविता चेत्सुमनास्तदा भवेयम् ।। 23

कृतचङ्क्रममङ्कणेषु किञ्चित्पणवत् किङ्किणिरिङ्खदङ्घ्रिपद्मम् ।
यदि सद्महितं सुतं श्रितं स्यात् तदिदं सद्म हितं भवेत्तदानीम् ।। 24

मयि रेणुविहारिणं कुमारं दृढमाश्लिष्यति तद्रजोनुषक्तम् ।
अखिलावयवेष्टदं कदानु कथमाख्यातु धराधुरंधरत्वम् ।। 25

तनयस्य तनूगतं रजश्चेन्मलिनत्वं तनुयान्मदीयदेहे ।
मृगनाभिरसस्तदेव भूत्वा सुरभित्वं सुलभं प्रकल्पयेत ।। 26

उदितैरुपमातुरात्मजातो विधुमाकारयिता यदा [1]तदैव ।
अमुना मम सम्मदाभिधानं न विजृम्भेत किमम्भसां निधानम् ।। 27

इति पंक्तिरथं तमीरयन्तं सुमनीकर्तुमुदीतधीः सुमन्त्रः ।
सदसि व्रतिनां सनत्कुमारात् श्रुतपूर्वं शुभमब्रवीदुदन्तम् ।। 28

भविता भुवि रोमपादनामा प्रभुरंगाधिपतेःसुतः कदाचित् ।
निजदेशमवग्रहाभिभूतं विमृशन्मन्त्रयिता स विप्रमुख्यैः ।। 29

---

1. तथैव ।

अथ तद्वचनात्स ऋष्यशृङ्गं तनयं दिव्यविभं विभाण्डकस्य ।
कमनीयकटाक्षधोरणीका गणिका:प्रेष्य स नेष्यति स्ववासम् ।। 30

अवनीपतिराशु वर्षयोगात्सफलां सम्यगिलां वितन्वतेऽस्मै ।
विनयेन युतां सुतां [1]स शान्तां मुनये दास्यति मध्यमे कृशां ताम् ।। 31

सवनं स मुनि:प्रकल्प्य तुभ्यं चतुरश्चक्रवृतिक्षमान् कुमारान् ।
वितरिष्यति तथ्यमेतदित्थं श्रुतवानस्मि सुतात्पयोजसूते ।। 32

अधुनैष भजत्यवग्रहार्तिं निजदेशे सुधियां गिराङ्गराजः ।
तदिदं व्यपनेतुमृष्यशृङ्गानयने प्रेषयति स्म वेशयोषाः ।। 33

प्रभुणा प्रहिता मृगीदृशस्ता व्रतिचन्द्रानयनव्रते प्रशस्ताः ।
विविधानि विभूषणानि धर्तुं सविलासं चतुरास्तदारभन्त ।। 34

इदमानयनाद्यशो दधामीत्यभिधात्री किमधत्त हारमेका ।
अनुरागयुतं तमाचराणीत्यधितान्या ब्रूवतीव रत्नकाञ्चीम् ।। 35

इतरा पुरुषात्मनाटिकायां चतुराच्छाद्य दुकूलकञ्चुकेन ।
सुदृढं स्वकुचौ सुवर्णमल्लीकलिकादामसखीं शिखामकार्षीत् ।। 36

कमलायतलोचना करेऽन्या कमनीया[2]न्यसिताश्मकङ्कणानि ।
न्यदधादिदमंशुभिस्तदीये हृदये मोहतमो विधातुमेव ।। 37

रमणीयकुसुम्भरक्तचेला सितपिष्टातधराकरात्तवेत्रा ।।
अपरा विरराज वन्वनाय व्रतिनस्तादृशवेषधारिणीव ।। 38

तमनञ्जनमप्यहं विधास्ये निजनेत्राञ्जननिश्चलाभिलाषम् ।
इति किं ब्रुवती सलीलमक्ष्णोरदधादञ्जनमम्बुजाननाऽन्या ।। 39

1. शनीशान्तां 2. असितांश ।

अनुरूपमनुप्रतीकमेवं स्वधृतान्याभरणानि भूषयन्त्यः ।
तनुकान्तिभिरङ्गनाः प्रयान्त्यः पथि विस्रम्भकथा मिथो वितेनुः ॥ 40

अयि माधवि तावकीनवाचा मकरन्दं कलयस्व मौनिपार्श्वे ।
वितनुष्व विलासहासभासा शशिरेखे शतधा शशाङ्कपादान् ॥ 41

रचयस्व ऋषिं तमृश्यशृङ्गं मधुरादीक्षणतो मृगीक्षणा त्वम् ।
अनुरञ्जय तन्मनस्सलीलं कलिताभिःकलकण्ठि गीतिकाभिः ॥ 42

इति सादरमीरयन्त्य एव प्रमदा नेत्रपथातिथिं वितेनुः ।
सरसीवरशीतवातपोतैर्हृतमार्गश्रममाश्रमं तदीयम् ॥ 43

नटनस्फुटनीलकण्ठपिञ्छप्रकरच्छायशयानलेलिहानम् ।
गजपोतकगात्रेसक्तपांसुप्रमृजाकल्पनचुञ्चुपञ्चवक्त्रम् ॥ 44

अनुदग्ररसालशाखिशाखाफलरक्षाप्रवणप्लवङ्गपोतम् ।
उटजाङ्ण [1]नीयमाननानातृणधान्यावनसक्तऋष्य (शृङ्गम्) 45

ददृशुः सुदृशस्तमावसन्तं शिरसा चित्प्रततिप्रतत्युपघ्नम् ।
दधतं मुनिमुन्मिषत्तपस्याशिखिधूमाङ्कुरमोहदायिशृङ्गम् ॥ 46

अवनाववतीर्णवान् रविर्वा पुरतो मूर्तिमुपेयिवान् शिखी वा ।
इति तस्य विमृश्य दिव्यतेजः प्रमदाःकिञ्चिदपासरन् भयेन ॥ 47

तरुणीरथ ता निरीक्ष्य मौनी पवनस्पन्दनतः पुरश्चलन्त्यः ।
व्रततीविततीरमंस्त चेतस्यलिपुष्पस्तबकप्रवालधन्याः ॥ 48

गिरमेष निशम्य गीतभङ्गीमपि तासामरविन्दलोचनानाम् ।
शुकसल्लपनं कुहूमुखानामृषिचन्द्रो हृदिपञ्चमञ्च मेने ॥ 49

---

1. तायमान ।

अखिला रमणीमणीरथैता हरिणी[1]स्त्रस्तदृशो विशालभावात् ।
मृगगर्भभवो मुनिस्स मेने सुधियो हेतुगुणं न विस्मरन्ति ॥ 50

श्रुतिहृद्यमुदारभङ्गि गानं सुदृशां तत्र सुतो विभाण्डकस्य ।
निरवद्यमसौ निशम्य हर्षं समधत्तात्मनि सामगानबुद्ध्या ॥ 51

वनजाक्षितमा निरीक्ष्य वक्षोधृत[2]कुण्डीनवमौक्तिकाक्ष[3]दाम्न्यः ।
मनुते स्म तदा मनस्यपूर्वान् मुनिरश्मश्रुमुखान् स मौनिमुख्यान् ॥ 52

सविधं समुपेत्य सैष तासां विधिनाऽर्घ्यादिभिरर्हणां विधाय ।
मृगशावदृशां मृदूक्तिपूर्वं परितृप्तिं विदधे फलार्पणेन ॥ 53

सुदृशोऽपि च नृत्तगीतवाद्यै र्विरचय्यातनुदेवतासपर्याम् ।
फलमर्पितमेतदि[4]त्ययच्छन् मुनये मोदकमादरादमुष्मै ॥ 54

भवदाश्रमदर्शनाद्भवामः प्रयताः स्म द्रुतमस्मदाश्रमांश्च ।
अव लोक्य विधेहि पावनानित्युदितस्ताभिरसौ सह प्रतस्थे ॥ 55

अथ ता धृतमन्दयानलीलाः करदण्डोल्लसितं जितारियूथम् ।
मुनिकुञ्जरमानयन्नुपायात्पदवीयं प्रथिता हि पद्मिनीनाम् । 56

उपयाति बुधोत्तमे मुनीन्द्रे पुरतो (ऽस्माद्ययु) रम्बुदास्तदानीम् ।
समुपायति नेतरि स्वकीये न किमायान्ति पुरस्सरास्तुरङ्गाः ॥ 57

स मुनिःप्रविवेश वेशयोषाजनभूषारुचिजाल[5]भासमानः ।
अवलोककलोकवीक्षणाब्जस्रजमङ्गक्षितिपस्य राजधानीम् ॥ 58

समुदीक्ष्य समागतं व्रतीन्द्रं धरणीभर्तरि दानवर्षुकाब्दे ।
अभिवर्षति हर्षबाष्पवर्षं ववृषुर्वारिधरास्तदीर्ष्यया किम् ॥ 59

1. हरिणीस्तत्रदृशां 2. कूडी 3. धाम्नः 4. त्यदाशन् 5. भाष्यमाणः ।

अधिकं दधतः प्रमोदमात्मन्यवनीमण्डलभर्तुरङ्गसीम्नोः ।
पुलकाङ्कुरपुञ्जपूरितैका कलमाङ्कूरगणैःकरम्बिताऽन्या ॥ 60

तदनु प्रमना धरामरुत्वान् मुनयेऽस्मै मदनस्य मोहनास्त्रम् ।
[1]तनयां विनयाददत्त शान्तां कनकालंकृतिभिः कनद्दिशान्ताम् ॥ 61

वसुधाबजशासनो विजानन्ननघं शान्तमृषिप्रवेकमस्मै ।
वितताार विशेषवित्स शान्तामिति[2]सर्वेऽप्यमनाग्जनाः शशंसुः ॥ 62

वसति क्षितिपस्य तस्य गेहे स यतिः सम्प्रति शान्तया समेतः ।
त्वरितं नृपते तमानय त्वं नवनीयास्तव नन्दना भवेयुः ॥ 63

उदितं तमुदन्तमानुपूर्व्या स सुमन्त्रेण सखोत्सुको मघोनः ।
समभाषत कोसलात्मजायै सुतलाभोत्सवशर्म सूचयन्तम् ॥ 64

अथ सत्वरमन्वितो वधूभिः सह गत्वा सचिवैर्गुरोर्निदेशात् ।
ऋपुंषिगवमृश्यशृङ्गमुर्वीपतिरानेष्ट स शान्तया प्रहृष्टः ॥ 65

तमृषिं सह शान्तया निजान्तःपुरमानीय पुरोधसा निदिष्टः ।
विधिवत्पृथिवीन्दुरर्चयित्वा स तदाऽऽत्मानममन्यतातिधन्यम् ॥ 66

सुकृतातिशयं प्रकाशयित्रे सुतलाभाय वसुन्धराबिडौजाः ।
सरयं हयमेधमेधमानप्रभुताशक्तिरियेष सैष कर्तुम् ॥ 67

अथ तस्य विभोरभीष्टदायी सुकुमारानिलपोतसूतिमासः ।
मधुरान्नकरो मधुव्रतानां मदनेहामदभूरभू[3]दनेहः ॥ 68

अधिकाननमासितेव वाचां प्रसवित्री प्रसवप्रजा बभाषे ।
अदसीयविपञ्चिकारवाणामनुकुर्वन्ति तदा स्मभृङ्गनादाः ॥ 69

---

1. सनयां 2. सर्वेऽप्यमानञ्जगूजनाः 3. दनेहाः ।

अनवः सुमनोन्तरे रसालः कलकण्ठ्यां कलगानमाचरन्त्याम् ।
प्रददौ तरुणप्रवालमालां सरसानां सरणी न तादृशी किम् ॥ 70

सुमनःस्तबके सुधामयूखे गिलिते [1]षट्पदसिंहिकासुतेन ।
सकला वियुता भयाम्बुराशौ सवधूकाश्च सुखाम्बुधौ न्यमज्जन् ॥ 71

कुसुमास्त्रकुसुम्भकेतनेषु च्यवमानाः किसलेषु चम्पकानाम् ।
पवमानवशात् परागरेखास्तपनीयाकलिता लता इवासन् । 72

क्वथिता वियुतोष्मबाष्पतोयैर्विषमास्त्रस्य विभोर्विसृत्वरेण ।
भुजधाममहातपेन तप्ता कृशिमानं क्रमशो निशाऽऽनशे किम् ॥ 73

मधुरेष निजाधिभूविरामप्रकटीकारिकुहूकृतानुबन्धः ।
उचिता किमिहासिकेति चिन्तां दधती यामवती दधार कार्श्यम् ॥ 74

वनसीमनि माधवेऽलिपालीमुरलीं वादयति प्ररूढरागम् ।
[2]अभवन्नखिलाः पिकास्तदानीं किसलास्वादकला[3]गताभिलाषाः ॥ 75

मधुलिट्कुलमन्तरान्तरोद्यन्मधुसंसङ्गि दधन्मधूक[4]दाम ।
ग्रथितं लतिकामधूपयामे नवदूर्वाभिरिवाभि[5]शोभते स्म । 76

तिमिराण्ययुतान्ध्य[6]दायिनो भ्रमराश्चम्पकमप्यनङ्गतेजः ।
तदिदं न कदापि तान्यवापन् भुवि तेजस्तिमिराणि किं स्पृशन्ति ॥ 77

वनसीम्नि वनप्रियो [7]दलादी सुमनःश्रीगुरुमेत्य तत्प्रसादात् ।
स भजन्नचिराय शब्दविद्यां गणयामास न काकविं नवीनम् ॥ 78

व्रततीसुदृशा विलासभाजा तरुणालिङ्गितया दृढं सुखात्किम् ।
अविलोलकनीनिकं चकाशे प्रसवास्वादपरद्विरेफदम्भात् ॥ 79

---

1. षद्वद 2. अभवन्नकिलाः 3. गतभिलाषः 4. धाम 5. शोचते स्म 6. दायत्वात् 7. दलादि ।

कनकातिशयः क्वचित् कुतश्चित् घननीलालिविजृम्भणं च वन्याः ।
क्वचनाप्यभवन्नवच्छदश्रीः सुरभौ सन्ततसन्निधानभाजि ।। 80

परितः स्थितपल्लवांशुताम्राः प्रसवाष्षट्चरणासितास्सिताभाः ।
सुदृशामिव दृष्ट्यो लतानां [1]अरुणाश्श्यामलपाण्डरा व्यराजन् ।। 81

असमास्त्रभटो निहन्ति पान्थान् मदयुक्तो मधुनेति शङ्कराय ।
गदितुं किल तस्य गर्वभेत्त्रे जगतां बन्धुरयाद्रयादुदीचीम् ।। 82

नलिनीसुहृदाशु दक्षिणाशां विसृजन् मानसरम्यपद्मिनीषु ।
कलयन् स ययौ करप्रसारं समये रागजुषामयं स्वभावः ।। 83

जगति व्रततीषु पप्रथे या सति वासन्त्यपि माधवीति चैत्रे ।
अभजन् बहुधैव तां द्विरेफाः प्रभुसम्बन्धयुजो भजन्ति सर्वे ।। 84

स्फुटमात्मनि पुण्ड्रकं शरासं प्रततं प्रेक्ष्य निजप्रभोःस्मरस्य ।
मधुरेष नवं मधुव्रतालीगुणमेवाकृत पुण्ड्रकं शरासम् ।। 85

वरविद्रुमभूषितान्तराले वनराशौ प्रसृताःप्रवालरेखाः ।
बडवाग्निशिखा न चेत्कथं ताः क्वथितान्यध्वगजीवनान्यतन्वन् ।। 86

भ्रमणीं [2]भ्रमरो विधाय तुङ्गद्रुमशाखासुमभाजने दधार ।
[3]सुरभिप्रहितं सुवर्णचेलं [4]चरमाङ्गस्थपिशङ्गिमापदेशात् ।। 87

मधुरेष वनेसु चम्पकाढ्ये मधुवर्षे सुमपांसुशारदाभ्रे ।
स्थलपद्मजडिम्नि च स्वभाजि प्रकटीकृत्य ऋतुप्रभुत्वमाभात् ।। 88

विपुले नयने विहारभाजां प्रमदानां प्रमदावनेषु दृष्ट्वा ।
चरति त्रपया शनैःकुरङ्गे स्वतुरङ्गे पवनश्चचार मन्दम् ।। 89

---

1.. अरुणस्यालमपाडरा 2. भ्रमरी 3. सुरभिःप्रहितं 4. चरमाङ्गस्व···मपदेशात् ।

वसुधामघवान् वसन्तमेवं विलसन्तं रविसन्ततेरधीशः ।
समुदीक्ष्य स मोदमानचेताः सचिवांश्च द्विजपुंगवानवादीत् ।। 90

अधुना मधुरेधते समन्तान्मखवस्तून्यखिलानि संभ्रियन्ताम् ।
शुभलक्षणलक्षितोऽनु जाग्रच्चतुरङ्गः प्रविमुच्यतां तुरङ्गः ।। 91

क्रमशःसरयूत्तरप्रतीरे क्रतुशाला परिकल्प्यतां विशाला ।
निगमार्थनिवेदिकाऽत्रवेदिः क्रियतामाद्रियतां च शिल्पिवर्गः ।। 92

कल्पोदितेन विधिना क्रतुरश्वमेधो निर्वर्त्यते नियमवृत्ति यथा भवद्भिः।
आपाद्यतामिह तथाविधसंविधानमित्यब्रवीन्नृपतिरिन्दुमतीतनूजः ।। 93

इति [1]सुरपतेःसख्यावाख्याति पार्थिवपुङ्गवे
श्रवणमधुरं स्वादंस्वादं तदुक्तिसुधारसम् ।
अजनि धरणीभर्तुःकर्तुं [2]वचस्समयोऽधुने-
त्यदधत महामात्रादिकं हृदि कौतुकम् ।। 94

तदनु तपोनिधेस्तरणिवंशगुरोर्वचसा
सत्रनविलोकनाय स सुमन्त्रमहासचिवः ।
अवनिपुरन्दरान् द्रुतमनीनयदाप्तजनै-
रघुनगरीमरीणशुभवैभवलाभकरीम् ।। 95

तत्तादृग्घटिकार्धनिर्मितशतश्लोकीफणिग्रामणी-
वाणीप्राकृतशास्त्रनैपुणसमुन्मीलद्यशःश्रीजुषा ।
देव्योद्यन्मतिसख्यया मधुरवाण्यम्बाख्यया निर्मिते
श्रीरामायणसारकाव्यतिलके सर्गस्तृतीयोऽभवत् ।। 96

इति श्रीरामायणसारकाव्यतिलके
तृतीयः सर्गः

1. सुरपतिःसख्या व्याख्याति 2. वचस्यमयो ।

# श्रीरामायणसारकाव्यतिलके

## चतुर्थः सर्गः

अथागतानामतिहर्षकारिका विधाय राज्ञां विविधोपकारिकाः ।
उपायनौघैरुपचारपूर्वकैरपूपुजत्तानजभूपनन्दनः ।। 1

सुमध्यमाभिस्तिसृभिः शुभे दिने वसिष्ठवैभाण्डकभूपिताग्रभूः ।
वितानशालामविशद्दिशां पतिः सरोजजन्मेव सभां त्रयीयुतः ।। 2

सवामदेवा जमदग्निगाधिभूमरीचिमैत्रेयकणादकाश्यपाः ।
अगस्त्यजाबालिपुलस्त्यगौतमाः क्रतौ तदीये क्रमशः समागमन् ।। 3

समागतांस्तत्र समस्तमौनिनः समर्च्य तान् सैष धरापुरन्दरः ।
समन्वितं सप्तभिरेव मौनिभिः [1]सहस्रमन्युं शतमन्युमातनोत् ।। 4

अवर्ततोद्गातृभिरत्र होतृभिः शुभा सभाऽध्वर्युभिरध्वरे विभोः ।
सनातनैरालपनैः सहस्रधा समेधमानैरिव साङ्गतां गतैः ।। 5

विधीन् स जानन्नपि वेदचोदितान् अरुन्धतीबान्धवऋष्यशृङ्गयोः ।
निदेशतो भूमिशतक्रतुः क्रतुं विधातुमारब्ध यथाविधि प्रधीः ।। 6

क्रमादरण्याकलितो हुताशनो महाध्वरे तस्य महीशतक्रतोः ।
प्रवृद्धकीलप्रकरो बभावसौ [2]जगत्यरण्याकलितस्तथा न किम् ।। 7

स गार्हपत्याहवनीयदक्षिणाग्निभिः प्रणीतैर्धरणीपतिस्ततः ।
अतीव पूनाकृतिभिस्तदा बभौ उपास्यमानाभिरिव त्रिमूर्तिभिः ।। 8

---

1. सहस्रमन्यं 2. जगित्यरण्या ।

ध्रुवोपपन्नाभ्युदयं ध्रुवोपभृज्जुहूस्रुवादीनि बहूनि भूपतेः ।
प्रकाश्य पात्राणि यथोक्तलक्षणैः [1]स्तवैकपात्राण्यभवन् सभासदाम् ।। 9

अथ क्रमाद् ऋग्यजुषोक्तिपूर्वकं प्रवर्धयन्तस्त्रितयीं हविर्भुजाम् ।
अमी तदुच्चारणनैपुणात्सभामहर्षयंस्तत्र महर्षयः क्रतौ ।। 10

विभाण्डकापत्यसमागमोत्थया पयोदपंक्त्या मखधूमरेखया ।
अभूयत प्राज्यतराज्यधारया विलोलकीलाचपलाकलापया ।। 11

मखाग्निधूमे त्रिदिवाक्रमक्षमे महेन्द्रजित्तातविभीतचेतसाम् ।
सुराङ्गनानां श्वसितानलोदिताः श्रयन्ति धूमाः स्म शमं तदद्भुतम् ।। 12

कृशानुराज्याकलिताहुतिक्रमात् करम्बितज्वालकलापभूरभूत् ।
कृशानुराज्याकलिताहृतिक्रमात् ज्वलेज्जगत्यामिति युक्तमेव तत् ।। 13

कुशासने नित्यकुतूहलान्वितः कुशासनायत्त इति क्व वाद्भुतम् ।
इदं तु चित्रं प्रयताशयोऽप्यसौ विशां पतिर्विप्रयताशयोऽभवत् ।। 14

वलक्षदीक्षावसनाख्यचन्द्रिकां प्रकाश्य राजा प्रथयन्निजोदयम् ।
समन्त्रघोषं परिषन्महाम्बुधिं प्रकल्पयन्नेव सदीक्षितो बभौ ।। 15

सतां मतां सत्वगुणप्रधानतां स एष शंसन्निव सर्वधीमताम् ।
[2]समन्वितांगो नवनीतचर्चया पुपोष लक्ष्मीं पुरुषोत्तमः स्वयम् ।। 16

रमाश्रयं राममशेषकांक्षितं महानिधिं द्रष्टुमना इवामनाक् ।
दधार हृष्टो धरणीपुरन्दरः शुभोदयव्यञ्जनमञ्जनं दृशोः ।। 17

नृपालमेनं नवनीतपाण्डरं प्रकाशयन्तं महतीं शुभश्रियम् ।
दमानपेतं दधतं मृगाजिनं जनोत्र नामन्यत किन्त्वजात्मजम् ।। 18

---

1. तवैक 2. समन्वितां गो नवनीतचर्चया ।

करेण कल्पद्रुमदण्डमन्वहं [1]विवृण्वताऽसौ विपुलाबलाहितः ।
आराध्य [2]दारूच्चरदण्डमेकदा प्रणामि तत्किन्विति संसदभ्यधात् ।। 19

द्विसप्तलोकीपरिपालनाकृते [3]द्विषन्मुरोऽत्रावतरिष्यति क्षितौ ।
इतीव शंसन्नियता स्तथाङ्गुलीरधत्त धात्रीकमिता करद्वये ।। 20

शिरस्यधात्पार्थिवलोकशेखरो दुकूलमुष्णीषमशेषसन्नुतः ।
सुरस्रवन्तीमिव सोऽनघाकृतिः सुधांशुचूडः सुमनोजनानवन् ।। 21

स पूरुषव्याघ्र इति प्रतीतिमान् महावने तत्र महीनिधिर्वसन् ।
प्रदर्शयन्नौपयिकं बभौतरां कुरङ्गकृत्तिस्थितिमात्तकौतुकः ।। 22

कटाक्षतः कार्यशतानि सूचयन् दधार यन्मौनमुदारधीरयम् ।
तदेव देवारितलोदरीकरक्वणन्मणीकंकणमुद्रणाऽभवत् ।। 23

धवित्रसंजातपवित्रमारुते प्रवर्तमाने पवमानबान्धवः ।
अनानटीत् प्राज्यरसं वहन्नसौ सुखप्रदाता हि सुहृत्समागमः ।। 24

प्रवर्ग्यकर्मावसरे प्रदक्षिणं ज्वलन् विधूमं ज्वलनस्समुद्ययौ ।
सुरान् द्विषन्तः कति वा विहायसीत्यवेक्षितेवास्य विभोर्मही[4]भृतः ।। 25

अदात् द्विजेभ्यो नृपतिः स पायसं तदा चतुर्भ्यः तदवाप हेतुताम् ।
चतुस्तनूजात्मकपायसागतेर्भजेत दाता हि फलं यथोचितम् ।। 26

मखालये तत्र हिरण्मयेष्टकानिकाय[5]कान्तिः नितरामराजत ।
विभोर्निजस्यागमनं विजानती पुरैव पद्मेव समागता स्वयम् ।। 27

अवेक्ष्य तार्क्ष्यं कनकेष्टकाकृतं स्वयं सुपर्णः स समेतवानिति ।
उपात्तवज्रो मघवानुपागतस्त्रपाभरं प्राप विशेषदर्शनात् ।। 28

---

1. विबृण्वतं सा 2. दारुच्चर 3. द्विषन्मुरस्याव 4. भरः 5. दिकाय ।

त्रयीमयः प्राक्तन एव पत्रिराडसौ चितो मन्त्ररवस्तदारवः ।
तदीयसन्दर्शन [1]निःस्वनक्रिया [2]नवामृतान्नानि मखे प्रपेदिरे ॥ 29

त्रिसप्तवारं जितवन्त माग्रहा(न्नृ)पान्मुनिं जेष्यति सत्र(जो भ)वन् ।
इति ब्रुवाणा इव निर्जरान् प्रति त्रिसप्तयूपा व्यरुचन् दिविस्पृशः ॥ 30

समर्च्य गन्धाक्षतपुष्पदामभिः कृती पशूनां त्रिशतिं क्षितीशिता ।
समर्पयामास स जातवेदसे शु(चे)हिता(र्थी)यदि किं न दीयताम् ॥ 31

क्रमेण पूर्णे सति हायने [3]मुदा महायने तत्र हयं समागतम् ।
त्वराजितत्वत्सखमर्पये तवेत्यजातमजोऽग्रे निदधे हविर्भुजः ॥ 32

अनन्तरं वह्निरतन्तनीन्मुदा तदर्पिताश्वो रसचन्द्रपारणम् ।
मखाशनेषु प्रथमं हविर्भुजा जगत्प्रतीतं खलु चान्द्रपारणम् ॥ 33

तुरङ्गमं साङ्गममुष्य जुह्वतो हुताशने [4]साङ्गतया महाक्रतोः ।
फलं भविष्यत्यचिरादिति द्विजाः प्रतुष्टुवुस्तुष्टहृदः पदे पदे ॥ 34

तमृष्यशृङ्गं कतिचिद्व्यलोकयन् शशंसुरन्ये शतधा मखक्रियाः ।
हृदाभ्यनन्दन्नजनन्दनं परे ववन्दिरे हव्यवहं तदेतरे ॥ 35

तदन्तरे केचन भूसुराः परे क्रमे च चर्चाजटयोरदर्शयन् ।
पटुत्वमन्येऽपि फणीन्द्रभारतीकणादवाणीकपिलोदितादिषु ॥ 36

महीमहेन्द्रेण महीसुरेश्वरान् पुनःपुनः प्रीणयितुं यतात्मना ।
उपाहृता [5]द्रोणसुमोत्करा इव क्रतौ व्यराजन् कलमान्नराशयः ॥ 37

निजेश्वरानन्दविधायिनः त्रिता[6]मिलद्विशालाक्ष्यनपायसन्निधेः ।
घृतान्नसूपप्रमुखानि तन्मखे कथं नु वस्तून्युदितानि नाभवान् ॥ 38

---

1. निःस्वनश्रिया 2. नवामृतान्नानिव के प्रपेदिरे 3. महा 4. संगतया–
5. द्रोणसुमात्करा 6. मिलद्विशालक्ष्यनपाय ।

सितान्नसर्पिःपरमान्नसूपदध्यपूपशाकाद्यत्रलोक्य केवलम् ।
अतीव साहित्यमवाप्नुवन् जनाः कथं तदास्वादकृतो नु नातृपन् ।। 39

अहो घृतं पायससूपपूपमप्यलं दधिक्षीरसिताफलं बहु ।
इति द्विजानां स वचोरसायनान्यतृप्यदास्वाद्य नृपोऽप्युपोषितः ।। 40

दिने दिने भूदिविजान् गतागतश्रमं विनैवात्र यथेष्टमश्नतः ।
हविष्कृते प्राप्तगतागतश्रमाः शशंसुरिन्द्रप्रमुखा मखाशनाः ।। 41

बिषप्रदस्य [1]द्विजराजमौलये स सद्गुणाम्भोधि (रकी) र्तिमम्बुधेः ।
अनेककोटिद्विजराजमौलिसा[2]त्कृतादतानीदमितामृतान्नतः ।। 42

धरामराःकेचन सूपकारकान् विलोक्य मृष्टान्नविशेषतोषिताः ।
अमी कि(ल स्व)क्षतसूपकारका गुणाधिका इत्यनुवारमस्तुवन् ।। 43

अनेन तेजोभिरहं निराकृतः प्रणामपूर्वं परिपूजितोऽधुना ।
इति प्रमोदादिव नृत्तमातनोत् शिखाग्रलौल्येन सखा नभस्वतः ।। 44

मखे भवन् बाणमखानले परः पुमान् करिष्यत्यमरद्विषां वपाः ।
इहेति वक्तीव हितं हुताशने वपाः पशूनामजुहोन्नृपाग्रणीः ।। 45

अपारमाघ्राय वपापरीमलं पवित्रमुर्वीपतिना समं मुदा ।
ऋते प्रयासादभजन् कृतार्थतां तदैव सर्वेऽपि सभासदो जनाः ।। 46

गणाय वाग्जानिगुणाय ऋत्विजां [3]गणेयधीर्गां चतुरब्धिमेखलाम् ।
स दक्षिणामत्र सुदक्षिणापतेः प्रभुः प्रपौत्रः प्रददौ मुदा तदा ।। 47

गवानया किं [4]फलमेकयेत्यथ क्षमामराणां वदतां नराधिपः ।
अनेकशो गाश्च मणींश्च भूरिशो वितीर्य दुग्धोदधिमत्यशेत सः ।। 48

1. द्विजराजमौलयः 2. कृतादतानीममितामृतान्नतः 3. गणेयधिर्गां 4. फलमेकया-कयेत्यथ ।

विवृत्य वक्त्रं विनयेन याचते द्विजाय हस्तस्थितमेष कंकणम् ।
विशामधीशो वितताार तत्क्षणं घनश्रियामौपयिकं हि तन्न किम् ॥ 49

अजस्रमेतस्य चमूसमुत्थिते रजस्समूहे रविसोमपायिनि ।
आपुः क्रमात्सोममुमुष्य ऋत्विजस्तदद्भुतं किन्विति संसदभ्यधात् ॥ 50

अथर्वशीर्षोदितमन्त्रविस्तरैश्शुभंयुभिस्तत्र विभण्डकात्मजः ।
स पुत्रकामेष्टिमभीष्टदायिनीं यथोचितं कर्तुमथोपचक्रमे ॥ 51

प्रवर्तमानेऽत्र मखे समाययौ बुधैर्हविर्भोक्तुमनाः पितामहः ।
शचीशहव्याशयमाशराम्बुराण्मरुत्कुबेरस्मरघस्मरादिभिः ॥ 52

अथाङ्गकान्त्या गुणयन्नभश्श्रियं रथाङ्गशङ्खासिगदाधनुर्धरः ।
पतङ्गबिम्बे स्थितवानिवादिमं पतङ्गमारुह्य मुरारिराययौ ॥ 53

समागतं सारसपत्रलोचनं सनातनं सत्यवचोनिकेतनम् ।
सदःस्थिता स्तत्र जना व्यलोकयन्महानिधिं कंचिदकिंचना इव ॥ 54

उरःस्फुरन्निस्तुलकौस्तुभाधिक[1]प्रभामवाप्तुं जलधेरुपागतैः ।
स्थिरोत्तमाङ्गस्थिति वांछयोज्ज्वलैः कृतेन रत्नैर्मकुटेन मण्डितम् ॥ 55

दशास्यबाधां मकरालयेन तां पुरैव वक्तुं प्रहितौ श्रवोऽन्तिकम् ।
समाश्रयन्तौ मकराविव स्थिते नवे दधानं नवरत्नकुण्डले ॥ 56

भुजान्तरे सिन्धुभवां स्ववासनामदान्धपुष्पन्धयगानसौख्यतः ।
अजस्रसंवासवतीं वितन्वतीं वहन्तमंसे वनमालिकां सदा ॥ 57

[2]विहारभाजां विपुले भुजान्तरे मुहुर्महेन्द्राश्ममनोहरे गृहे ।
करावलम्बं [3]कमलादृशोस्त्विषां स्वयं प्रयच्छच्छुभलक्ष्म बिभ्रतम् ॥ 58

---

1. प्रदामवापुं जलधीरुपागतैः 2. विहारभाजो 3. कमलादृशस्त्विषा ।

विलोक्य नाभौ विशदाब्ज [1]मीर्ष्यया सुसौरभोज्जृम्भणमन्वितं श्रिया ।
[2]भुजान्तरासीमनि वारुणाम्बुजम् मणिं दधानं मथिताब्धिसम्भवम् ।। 59

सदैव नाभी [3]सरसीरुहास्थया सहोदरौ हार्दवशादुपागतौ ।
रविश्रियामारमणाविव स्थितौ रथाङ्गशङ्खौ दधतं करद्वये ।। 60

दिवि स्वसन्तानममर्त्यशासितुर्मुदे निधाय प्रतिपादनाकृते ।
भुवं प्रपन्नैः सुरभूरुहैरिव स्थितै[4]श्चतुर्भिः प्रचकाशतं भुजैः ।। 61

[5]दृढोपगूढादिव तत्तदाजिभू [6]जयेन्दिराभिर्जनकीर्त्यवृत्तिभिः ।
सुवर्णपट्टावलिभिर्विभूषितां दधानमिन्द्राहितभङ्गदां गदां ।। 62

निषेविणं नीडजलोकशेखरं निरीक्ष्य तद्वच्छ्रयतः फणीशितुः ।
तुलाजुषा नव्यदुकूलचोलतः प्रकाशभाजा धनुषा प्रसाधितम् ।। 63

नतभ्रुवां नन्दकमम्बरौकसां सुरारिसारङ्गदृशामनन्दकम् ।
अशेषलोकैरविभाव्यवैभवं समुद्वहन्तं करसीम्नि नन्दकम् ।। 64

सुपर्ववर्गासुलभामनुज्झितां श्रियः प्रतिष्ठां जगतां विवृण्वता ।
अमूल्यकल्याणकृतेन वाससा प्रकाशितप्राभवदिव्यविग्रहम् ।। 65

नखाङ्कुराणां नवकान्तिकन्दलैरसंख्यमार्गाभनिमेषनिम्नगाम् ।
अजस्रमुत्पादयतांघ्रिपद्मयोर्द्वयेन पश्यज्जनविस्मयप्रदम् ।। 66

[7]परार्घ्यरत्नाभरणैः परिष्कृतं समीक्ष्य साक्षादभिलक्ष्यमात्मना ।
तपःफलानामिव राशिमग्रतः स्थितं रमेशं नुनुवुर्दिवौकसः ।। 67

प्रसूरसौ श्रीर्जगतां तदीशिता पिता भवान् लोकगता वयं सुताः ।
अतो हरे नस्त्वमवेत्यलं गिरा कुमाररक्षाकुतुकी [8]जनोऽनघः ।। 68

1. मीर्षया 2. भुजान्तरा निसमी 3. सरसीरुहास्तता 4. श्चतुभिः 5. दृढोपगूढानिव 6. जयेदिराभिः 7. पराध्यं 8. जनोनः ।

भवान्धकूपे पतितं जनं भवान् गुणैर्भजन्तं गुणितैस्समुद्धरन् ।
करोति मग्नं करुणाम्बुधौ पुनः कथं नुमस्ते गरिमाणमीदृशम् ।। 69

[1]सहस्रसंख्याश्शरणं गताः प्रजाः पुनः पुनःपोषयितुं निरीक्षणैः ।
उपेत्य [2]पाठीनतनु मृषेतराण्युदीरितान्युद्धृतवान् भवान् प्रभो ।। 70

जनस्य यच्छस्यमृतं स्वतः परं [3]हरे व्यतारीरमृतं सुयाचताम् ।
अतीव यत्नात्कमठत्वमेत्य नः कथं नु लीलां कथयामहे तव ।। 71

भवान् द्विधा सत्वमयत्वमूर्जितं प्रकाशमापादयितुं [4]श्रियः पते ।
वलक्षभावं वपुषि प्रवर्तयन् वराहमूर्तिः वसुधामधारयत् ।। 72

भयङ्करं सर्वजनस्य शार्वरं प्रभिद्य भक्तप्रमदाब्धिपोषणम् ।
नखेन्दुरेखाभिरभङ्गुरं भवान् नृकेसरी [5]श्वैत्ययुताभिरातनोत् ।। 73

महेन्द्रवन्द्योऽपि भावानुपेन्द्रतां वहन् महत्त्वं परिमुच्य वामनः ।
बलिं [6]प्रसाध्येन्द्रमतिष्ठिपत्पदं स्मरन्त्यवन्तः [7]समये न लाघवम् ।। 74

[8]शुचिं द्विजातिं शुभमार्गचारिणीं प्रणीय धर्मप्रथितां प्रगल्भताम् ।
प्रकाशयन्नेव [9]भृगूद्वहो भवान् दयापयोधे धरणीमपालयत् ।। 75

इहावतारान् विविधानिदंविधान् प्रपद्य दैतेयभटान् रणोद्भटान् ।
विदारयन्नेवमुदारपौरुषो भवान् भुवं पालयते दयानिधे ।। 76

दशाननः सर्वनिशाचराग्रणीर्न रावणो विश्रवसः सुतत्वतः ।
स रावयन्नेव जगन्त्यरुन्तुदां [10]दधाति नूनं भुवि रावणाभिधाम् ।। 77

त्रिविष्टपद्वीपवतीजलान्तरे बुधाग्र...... ...................।
मुहुर्विहारा[11]नतिदिश्य कार्यवित्ततो.........तत्र चिराय वर्तते ।। 78

1. सहस्रसंख्याशारणं 2. पाठीरतनुं 3. हरेप्यतारीरमृतं सयाचताम् 4. श्रियः पतेः 5. शैत्य 6. प्रसाद्येन्द्र 7. समयेन लाघवम् 8. शुचि 9. भृगूद्वहे 10. ददाति 11. नतदिश्य ।

अमुष्य धामोष्मधुरामनीश्वरो विसोढु [1]मग्निर्व्यजनं दधौ पुनः ।
अथा(भि)[2]न्नवन्ननि(शं स)सत्रतां विगाहतेऽप्यापिच सत्रशालिकाम् ।। 79

स्वमाग्रहाज्जेतुमनाः कदा नुवा सदण्डयात्रां तनुयादिति त्रसन् ।
निलेतुमिच्छन् मलयाद्रि[3]कन्दरे(न भा)नुजो मुञ्चति दक्षिणां दिशम्।।80

निशाचरं चापि निजं हरित्पतिं निलिम्पवर्गेण समं रणाङ्गणे ।
दशाननो दण्डयते मदान्धधीर्न माद्यतां ह्रिस्व[4]परावगन्तृता ।। 81

प्रतिक्षणं तद्भुजपाशपीडया भवन्नपाशो बत यादसां पतिः ।
तरङ्गमध्ये तटिनीहृदीशितुस्तनोति संवासमतीव साध्वसात् ।। 82

प्रभञ्जनो गन्धवहोऽपि मारुतः परिप्लवात्मा भयतो दशाननात् ।
अवस्थितिं क्वाप्यनवाप्य साम्प्रतं समीरणत्वात् समयं नयत्यसौ ।। 83

जगज्जनामोदविधायि पुष्पकं प्रभौ निधीनां प्रतिपादयत्यपि ।
अधः पदं शैलमचीचलद्भुजैः सहेन्नु दायादशुभं नृशंसधीः ।। 84

दयाविहीनं दशकण्ठमुद्भटं विदूरतो वीक्ष्य विपाण्डराकृतिः ।
वहन् जटाभूतिधरः कपालभृद्वसत्यसौ भैक्षमटन् महानटः ।। 85

पुरस्तदीयोग्रभुजाग्रतेजसः खरांशु रास्ते शिशिरांशुरन्वहम् ।
हिमां(शुरेत) द्घनतापतापितः प्रतिक्षणं तिष्ठति तीक्ष्णदीधितिः ।। 86

अजात्मजस्यास्य नृपस्य सर्वतो मखाग्निधूम्यातिमिरे विसृत्वरे ।
कथं कथञ्चित्कलशाब्धिजा[5]गृहिन् ग्रहीतु माया(म) हविर्महीतले ।। 87

व (शान्नि) यत्या विशतोऽधुना भवत्
पदाम्बुजच्छायमिदं [6]समाश्रितान् ।
प्रमोच्य तस्मात् परितापमिन्दिरा-
हृदीश्वरात्वैव निधाय पाहि नः ।। 88

1, मग्निव्यजनं 2. तन्वान्ननि 3. कन्दर 4. क्व 5. गृहीन् 6. समा श्रिताः ।

(सुतीय)तः पंक्तिरथस्य (भूपतेर) मुष्य गर्भे मधुसूदनाधुना ।
विभज्य मूर्ति भवतश्चतुर्विधं प्रभूय निर्गन्धय पंक्तिकन्धरम् ।। 89

अवध्यभावं नरवानरेतरैः····· प्रभोरषिगृ·········. रम् ।
दशाननः······द्यर······दृप्तधीरशेषलोकं···न्य···वरार्यम् ।। 90

इति ब्रुवाणे त्रिदिवौकसां गणे हसन् प्रसन्नो हरिरब्जलोचनः ।
दिशन्न(भी ष्टं स)पुनस्सु(धामयीं)जगाद वाचं जगतामभीष्टदाम् ।।91

दशाननादेवमुपागता दशा कियत्यमर्त्याः कृतमाशये भिया ।
अहं हराम्य(द्य)शिरांसि रक्षसो महोत्पलानीव मदोत्कटः करी ।। 92

वचोऽनुसाराद्भवतां द्विषज्जये चतुर्विधां मूर्तिमुपेत्य साम्प्रतम् ।
इह क्षिताविन्दुमतीतनूभुवो नृपस्य गर्भे प्रभवामि निर्जराः ।। 93

इति प्रतिप्राभृतमूर्तिरात्मना समीरितान्यालपनानि [1]सौहृदात् ।
मखान्धसां मानससारसान्तरे मधूनि तन्वन् मधुजित् तिरोदधे ।। 94

हिरण्मयं पायसपात्रमुद्वहन् महोमयः कश्चन होमपावकात् ।
अथाविरासीत् पुरुषः सुधानिधिं नवोदयं बिभ्रदिवोदयाचलः ।। 95

असौ कृशानुः किमु मूर्तिमानुत त्विषामधीशोऽस्य विभोः कुलाधिपः ।
अभीष्टदायीत्यखिलाः सभासदः परस्परं सप्रमदं बभाषिरे ।। 96

उपायसंधानविदे समुन्मिषत् क्षपा(य स)न्त्रातमनीषिसंसदे ।
सपायसं पात्रमतो स पूरुषो नृपाय सन्दाय रयात्तिरोदधे ।। 97

स तेन दत्तां परमान्नपात्रिकां प्रभुः कराभ्यां परिगृह्य रंहसा ।
सुधाभिपूर्णं कलशं समुद्वहन् पुरो व्यराजीदिव पूरुषोत्तमः ।। 98

1. सोहृदात् ।

अदात्कौसल्यायै पायसस्यार्धमिद्धं सुमित्रायै चार्धादर्धमर्धं स शेषात् ।
क्षितीशः कैकेय्यै चिन्तयित्वा तमर्धं सुमित्रायै भूयस्तत्नसुत्रामममित्रम् ॥99

इत्थं चतुर्धा प्रविभक्तपायसप्रदानमेवास्य वसुन्धरापतेः ।
(प्रज्ञा)पकाश्चेतसि जज्ञिरे तदा चतुर्भुजाविर्भवनस्य सूचकम् ॥ 100

क्रतुभुजः क्रमशस्तदनन्तरं हरिमुखाः परिगृह्य हवींषि ते ।
पुरत एव वि(धाय पि) तामहं मुरहरस्य गिरा मुदिता ययुः ॥ 101

तदाऽब्ज[1]भू(स्तान मृता)न्धसोऽगदीत्
मदीयजृम्भादजनिष्ट जाम्बवान् ।
भुवं गता यूयमपि [2]प्लवंगतां
गताः (सहाया) भव (ता) शु देवताः ॥ 102

विधेरादेशात्प्रागजनिषत वाली दिविषदा-
मधीशात्सुग्रीवः सरसिरुहमित्रादनिलतः ।
हनूमान्नीलोऽग्नेर्हरिनगर[3]तक्ष्णोऽप्यथ नल-
स्ततो देवीवर्गाद्गजगवयमुख्याश्च कपयः ॥ 103

इत्थं क्लृप्ते सप्ततन्तौ तदानी-
मर्हाभिस्तानर्हणाभिर्मुनीन्द्रान् ।
सर्वानुर्व्याः शासितृन् मानयित्वा·
प्रीत्या युक्तः प्रैषयत्सैष राजा ॥ 104

तोषात्पूषकुलाग्रणीरथमणीभूषाविशेषान्वितो
भेरीशृङ्गमृदङ्गशङ्खनिनदैरापूरिताशान्तरम् ।
रामाभिस्सहितो रथद्विपहयोद्दामाब्जदामावृतः
श्रीकेलीकलनानिकेतनमगात्साकेतमुत्केतनम् ॥ 105

---

1. भूनि ·········धसो 2. प्लवंगता कृता 3. तक्लो ।

प्रस्ताराभिनवात्तवृत्तकविताधाटीकथाशुक्रिया
षड्भाषारचनाविशेषबहुधाविख्यातकीर्तिश्रिया ।
देव्योद्यन्मतिसख्यया मधुरवाण्यंबाख्यया निर्मिते
श्रीरामायणसारकाव्यतिलके सर्गस्तुरीयोऽगमत् ॥ 106

इति श्रीरामायणसारकाव्यतिलके

चतुर्थः सर्गः



# श्रीरामायणसारकाव्यतिलके

## पचमः सर्गः

कल्याणी धरणिसखस्यय तस्य देवी कौसल्या तदनु दधार गर्भमस्मात् ।
प्रागस्य प्रमदकृते कृतोर्भवन्ती कीर्तिश्रीरपि धृतवत्यजाण्डगर्भम् ।। 1

पद्माक्ष[1]स्तरणिकुलेऽवतीर्य कुर्यात् पावित्र्यं परमममुष्य [2]तत्प्रधानम् ।
नैवोर्व्यां [3]घटितमिति ह्रियेव चन्द्रः तद्वक्त्रं दधदरुचद्विपाण्डिमानम् ।। 2

सा राकारजनिकरानना तदानीमहारादमृतरसस्य पायसस्य ।
प्रत्यङ्गं प्रतिनवपाण्डिमानमाधादाधत्ते वपुरशनानुरूपभावम् ।। 3

पौलस्त्यप्रथितवरार्पणेन जातं मद्भर्तुः स्थिरमयशो हरिष्यतीयम्
गर्भाधिष्ठितशिशुनेति गौरवात् [4]त्रिर्गीदिव्या कृतपरिरम्भणेव [5]रेजे ।। 4

सा कान्ता तुहिनमयूख[7]रेखिकैव ज्योत्स्ना यद्विशदिमकैतवाच्चकाशे ।
स्वेदाम्भःकणनिभतो मुखात्तदीयादश्च्योतन्नलघुतुषारशीकराश्च ।। 5

गर्भे स्यान्मम तनया ददामि तुभ्यं तामित्थं [7]गदितुमिवोदरस्थिताय ।
तस्मै (सं)रसित मृदो निभेन तस्या गर्भं निर्भरमविशत्क्रमेण धात्री ।। 6

आख्याता परमहमेव रत्नगर्भे[8]त्यद्यैषा भवति चिरं च रत्नगर्भा ।
रत्नं कीदृशमिद[9]मित्यवेक्षितुं भूस्तद्गर्भं रसितमृदंशतो विवेश ।। 7

एतस्याः प्रथिमधरौ पयोधरौ द्वौ शैलेन्द्रौ न यदि निबन्धुमेष सिन्धुम् ।
गर्भस्थो हरति पुरा गिरीनितीमौ श्यामत्वं सपदि मुखे कथं न्वधाताम्।। 8

---

1. तरणी कुले 2. तत्प्रधाम् 3. घटित इति 4. त्रिगीर्देव्या 5. भेजे 6. रेखकैव-
7. गदितुमिवो दस्थिताय 8. त्यद्यचैषा 9. मित्यवेक्षितं ।

देवेन्द्रे चलति दिशासु पंक्तिकण्ठात्
भीत्या तं सततमुदुह्य विह्वलाहम् ।
रक्षेति स्थितमुदरे [1]शिशुं श्रयन्ती
तद्रोमावलिररुचद्घनालिरेव ॥ 9

एतस्याश्चकितकुरङ्गलोचनायाः
संजज्ञे त्रिवलि वलग्नसीम्नि लीनम् ।
तद्वीक्षाविभवभवद्रसानुभूत्या
मेदस्वी स तु वलिभो नृपो बभूव ॥ 10

तत्तादृग्रुचि परमान्नमन्यलोकै-
रप्राप्यं स्वयमुपभुज्य निःस्पृहेव ।
तन्वङ्गी मधुरतरेऽपि वस्तुजाते
सर्वस्मिन्नरुचिमधत्त सा तदात्वे ॥ 11

माधुर्यस्फुरणमनोहरे द्विजाना-
माशास्ये निखिलरसाभिनन्दनीये ।
स्वे गर्भे वसति फले समस्तवस्तु-
ष्वाधत्तारुचिमियमित्यदो हि[2]युक्तम् ॥ 12

घर्माम्भःकणनिकरेण गर्भलक्ष्म्यां
मुक्तासंघटितललाटिकां ललाटे ।
शक्राश्मस्रजमपि च [3]स्तनाग्रदीप्त्या
[4]तन्वन्त्यामियमसमग्रभूषणाऽभूत् ॥ 13

वृत्तोरुप्रबलतरश्रिया कुचाभ्यां
कुम्भाभ्यामपि समुपात्तभद्रलीला ।
तत्कालप्रवृधरसालसालसाङ्गी
सा भूमावकृत शनैश्शनैः पदानि ॥ 14

1, शिशु 2. युक्तः 3.स्तनास्रदीप्त्या 4, तन्वत्यामिय ।

तं विश्वम्भरमुदरे चिरं दधाना
तद्भारादिव तरलेक्षणा सृजन्ती ।
निःश्वासान्निबिडतरश्रमान्विता सा
मेदिन्यां न्यधित पदानि मन्दमन्दम् ।। 15

गर्भावस्थितिमधिजग्मुषः सुतस्य
त्रैलोक्यस्तुतचरितानुरूपमेव ।
आशासामतनुत सा मसारकेशी
तत्कालत्रितयविदोऽस्य हि प्रभावः ।। 16

सा मन्दं प्रणयसखीकरावलम्बात्
प्रासादं परिचितमक्षमाधिरोढुम् ।
सुभ्रूरुन्नतशिखरं सुवेलशैलं
सोत्साहस्थितिरधिरोढुमिच्छति स्म ।। 17

कान्ता सा लघुमपि [1]कन्दुकं गृहीत्वा
हस्ताभ्यां सकृदपि रन्तुमक्षमात्मा ।
विध्वस्तैर्बहुमुखवैरिवीरमस्तैः
कांक्षा[2]माकलयत कन्दुकैस्तु रन्तुम् ।। 18

बालासञ्चलितजलार्द्रिकासमीर-
व्यापारे भृशमसहिष्णुतां वहन्ती ।
पम्पोर्मीतरलपयोज[3]शीतवातैः
सा राज्ञी श्रममभवन्निराचिकीर्षुः ।। 19

आलीनां सरसि मुहु[4]र्विहारभाजा-
मालोके सकृदपि सा पराङ्मुखत्वम् ।
तन्वाना त्वरितमधीश्वरं नदीना-
माकांक्षामकृत तलोदरी तरीतुम् ।। 20

---

1. कन्तुकं 2. माकलय कन्तुकैस्तु 3. सीतवातैः 4. र्निहारभाजां ।

अभ्यर्णे न सति मृगार्भके विधात्री
व्यासक्ति हृदि परिपोषिते त्यजन्ती ।
मायावन्मृगमृगया विनोदभेदान्
कर्तुं सा कमलविलोचना [1]चकांक्ष ॥ 21

कैकेयी मगधनृपात्मजाऽपि चैवं
तस्योर्वीपतितिलकस्य मानसाब्जे ।
क्रीडन्तीं कृत शुभवैभवां तदात्वे
बभ्राते बहुविधगर्भलक्ष्मलक्ष्मीम् ॥ 22

प्राप्तोच्चे विलसति पञ्चके ग्रहाणां
सा चैत्रे शशिसहिते गुरौ कुलीरे ।
कौसल्या कलितपुनर्वसौ नवम्यां
प्रासूत प्रथितमिवाद्रिजा कुमारम् ॥ 23

गीर्वाणा ववृषुरनल्पपुष्पवर्षं
निस्साणास्सपदि नभोऽङ्गणे प्रणेदुः ।
स्वर्वेश्याः सरसतरस्मितोज्ज्वलास्या
लास्यानि स्फुटललितान्वितान्यतन्वन् ॥ 24

प्रायेण प्रमदरसाश्रुभिस्तदानीं
प्रस्यन्नैर्दिगधिभुवां प्रमार्जितेषु ।
पौलस्त्यप्रबलचमूरजोभरेषु
[2]प्रासन्न्यं परमवहन् दिशां मुखानि ॥ 25

आश्रित्य प्रभुममुमात्मजो मदीयः
ख्यातः स्यादिति विचचार गन्धवाहः ।
अमोदं दधदधिकं हवींषि गृह्णन्
[3]वह्निश्च स्फुटनटनप्रदक्षिणार्चिः ॥ 26

---

1. चकांक्षमु 2. प्रासन्यं 3. वह्निक्रस्फुटनटत्प्रदक्षिणार्चिः ।

दीपानां ततिरभवत् प्रसूतिगेहे
दीनार्चिस्तदधिकदीप्तिभिः पुरोऽस्य ।
नेत्रार्कत्रिचतुरभानु[1]पोषिताग्नि-
ज्वालाङ्कः क्व जयति कोटिसूर्यधाम्नः ॥ 27

आख्यातुं सुतजनिभाग्यमायतीना-
[2]माटोपादथ सुदृशां पुरैव गीर्भ्यः ।
शिञ्जाभिः पदघटिताः शशंसुरासां
[3]मञ्जीरा मघवसखाय पार्थिवाय ॥ 28

एताभिर्निगदितमेणलोचनाभिः
पुत्राविर्भवनशुभं निशम्य भूपः ।
सस्नौ सम्मदभरनाम्निसिन्धुपूरे
तत्कृत्यं समयसमञ्जसं न किं वा ॥ 29

स्नात्वाऽम्भस्यतुलमयं दुकूलचेलं
बिभ्राणस्तदनु वसुन्धराबिडौजाः ।
दृष्ट्वा तन्मुखमिहिकामयूखबिम्बं
दृष्टचौः सप्रमदमधत्त शीतलत्वम् ॥ 30

मौहूर्तान् मखितिलकान् मनीषिवर्यान्
आगन्तूनपि सकलानवेक्ष्य तेभ्यः ।
सोऽयच्छन् सुरभिसमास्समांसमीना
दीनाराभरणमणीवराम्बराणि ॥ 31

भक्तानां विधि[4]लिखिताल्ललाटभागे
सौभाग्यात् समधिकभाग्यवर्णक्लृप्त्यै ।
सङ्गृह्याकलितमिवाञ्जनं दधद्भचा-
मक्षिभ्यामथ नृपबालकश्चकाशे ॥ 32

1 पोष्पिताग्नि 2. आदोपादथ 3. माजीरा 4. लिखिताल्लता···गागे ।

कार्यं दुर्घटमपि चावलम्ब्यमानं
नो मुञ्चाम्यहमिति नैकधा जनानाम् ।
स व्यञ्जन्निव दृढमुष्टिपेशलाभ्यां
बभ्राजे नरपतिबालकः कराभ्याम् ।। 33

हासेन प्रसवमहेतुना [1]मधूलिं
लीलाभिर्भ्रमररुतं च रोदनेन ।
आसाद्य प्रकटमहागमक्रमोऽपि
ब्रूमः किं स बहिरुदक्षिपत्स्वपादम् ।। 34

विस्तीर्णे विमलदुकूलचेलखण्डै-
रास्तीर्णे मृदुशयने शयान एषः ।
संवेशं फणिधरसार्पवामभागे
व्यातन्वन्निव विरराज वारिजाक्षः ।। 35

पुष्पस्रक्परिकरभाजिडोलिकायां
बालोऽसौ विधुवदनाजनाधुतायाम् ।
आसीनः पवनपरिप्लवे पयोब्धेः
कल्लोले निवसतिमस्मरच्चिराय ।। 36

सन्दृब्धोरु(चिरचि)[2]रत्नगुच्छो
डोलाग्रे निजकुलनायकं रघूणाम् ।
नेतारं सपदि निरीक्षितुं समेतः
[3]पाथोजिन्यधिप इव प्रकाशते स्म ।। 37

कैकेयी तदनु घनौजसं तनूजं
पाकारेर्दिगिव पतिं त्विषां सुषाव ।
सिन्धूर्मी सुरमणिकौस्तुभाविव द्वौ
सूते स्म द्युतिसहितौ सुतौ सुमित्रा ।। 38

1. मधूंजि 2. यत्न गुच्छा 3. पथोजिन्यधिप ।

नाम्नाऽसौ (सु)तमतनिष्ट राममाद्यं
प्रह्लन्नो हृदि भरतं सुतं द्वितीयम् ।
ऐक्ष्वाकः सुतमथ लक्ष्मणं तृतीयं
शत्रुघ्नं शुभदिवसे सुतं तुरीयम् ।। 39

सम्राजो मखवसखस्य तस्य चित्ते
कुर्वाणाः कुतुकममी क्रमात्कुमाराः ।
चत्वारो बलिमथितुः प्रवर्धमाना
दोर्दण्डा इव शुभलक्षणा व्यराजन् ।। 40

माणिक्यग्रथितललन्तिकामनोज्ञा-
न्यव्यक्ताक्षरगदितानि सस्मितानि ।
वक्त्राण्युद्गतरदनाङ्कुराणि तेषां
सन्तोषायाजनि तत्र चक्षुषां न केषाम् ।। 41

फालोग्रोल्ललदलकद्विरेफभव्याः
प्रत्यङ्गं प्रकटपरागवर्मितास्ते ।
सौपर्वादृतचतुराकृतिप्रकारा
भूजाता इव भुवनस्तुता बभूवुः ।। 42

आम्नायं निखिलमधीत्य सर्वशास्त्रा
ण्यभ्यस्य श्रुतिजडमब्जजं प्रवीणाः ।
प्रख्याताः सकलकला गुरोः प्रसादा-
ल्लब्ध्वा ते मितकलमाक्षिपन् विधुञ्च ।। 43

ते कृत्वा क्रममतिमात्रशोणमृत्स्ना
लिप्ताङ्गाः पटुगति निर्गताः खुरल्याः ।
धातुश्रीभरमधिगत्य विन्ध्यदर्या
[1]निर्यान्तः करिकलभा इव व्यराजन् ।। 44

1. नियन्तः ।

आरूह्य क्षितिपतिनन्दना रयाढ्यान्
अश्वान् प्राग्घृतगरुतोऽधुनाऽप्यमी ते ।
एवञ्चेदखिलदिशः क्षणाद्व्रजामे-
त्यध्यायन् मनसि पतत्रि[1]वाजिनोंऽशाः ।। 45

एते प्रागधिमहि दन्तिनः स्वजा(तेः)
संरक्षां विहितवतो [2]मधुद्विषोंऽशाः
इत्यन्तर्मदकारिणो विचार्य सर्वेऽ-
प्यारोहेष्वदधत तद्वशंवदत्वम् ।। 46

[3]प्राप्तः प्रश्रितमथ [4]लक्ष्मणं प्रतीतो
रामोऽर्थं श्रित [5]इव राजते स्म धर्मः
शत्रुघ्नं भुवि भरतो विनीतमाप्तो
विभ्रेजे नय इव विक्रमं व्रतं [6]सः ।। 47

[7]भूमीशो विशदगुणाञ्चितैश्चतुर्भिः
पुत्रैस्तैर्बुधनगरीकरीव दन्तैः ।
बभ्राजे प्रमदभरात्प्रवर्धमानो
जम्भारेरधिकतरं जयं विवृण्वन् ।। 48

शक्रश्रीस्तदनु तनूभुवां चतुर्णा-
मुद्वाहं कलयितुमुर्वरामहीन्द्रः ।
आस्थान्यां गुरुसचिवाप्तभृत्यवर्गै-
रन्वीतश्चतुरमचिन्तयत्कदाचित् ।। 49

आत्माख्यामपहरति प्रभौ सुराणां
यः क्रोधाद्ध्रुवमचिकीर्षदन्यमिन्द्रम् ।
एकस्मिन्नवसर एव [8]कौशिकोऽस्य
क्षमाभर्तुः सविधभुवं समाससाद ।। 50

---

1. वाजिनोंकाः 2. मधुत्विषाङ्काः 3. प्राप्त 4. लक्ष्मण प्रतीतो 5. इति 6. नः-
7. भूमिषु 8. कौशिकोऽस्या ।

अद्राक्षीदथ तमृषिं हृषीकदन्ति-
श्रेणीसंयमन[1]विधांकुशायिताभिः
[2]क्ष्माजानिर्वृजिनसमीरपारणाहि-
प्रायाभिः प्रकटितगौरवं[3]जटाभिः ॥ 51

रुद्राक्षैर्मघवमणिस्रजं विभूत्या
पिष्टातं [4]सितगुरुजाटजूटलक्ष्म्या ।
सौवर्णं मकुटमपि प्रपद्य [5]साङ्गं
राजत्वं प्रतनमिव प्रदर्शयन्तम् ॥ 52

सम्राजे स्वयमपि यज्वनां पतित्वा-
दाख्यातुं मखभरणं सहात्मनैव ।
आयातं विधुमिव तेजसां निधानं
पाण्यब्जे स्फटिककमण्डलुं दधानम् ॥ 53

त्रातेष्वाश्रमधरणी[6]रुहेषु हार्दा-
[7]दात्मप्रस्थितिसमये रयेण गाढम् ।
श्लिष्यत्सु[8]व्रतमिव (चै) तदीयमंशं
संसक्तं स्ववपुषि वल्कलं वसानम् ॥ 54

वैशद्यं विशदगुणोच्चये तपोऽग्नौ
फालाक्षिज्वलनशिखां निधाय धात्र्याम् ।
आश्चर्यप्रकटितमैकमुख्ययोगा-
दन्यं धूर्जटिमिव तस्थिवांसमग्रे ॥ 55

दृष्ट्वा तं झडिति चिरत्नरत्नपीठा-
दुत्थाय क्षि(ति परिणीर्विनीतिपूर्वम् ।
आचार्यं बलमथितेव देवताना-
मासन्नं कुशिकतनूभवं ववन्दे ॥ 56

---

1. विधां दुकायिताभिः 2. क्ष्माजानिपैजिनसमीरपारणा प्रायाभिः 3. जघाभिः
4. सितमुरुजाटजूडलक्ष्म्या 5. सावं 6. रुपामहार्दा 7. दात्मा प्रस्थित समयी
8. व्रतमिवैतदीयं ।

मि(त्राय)त्विषि दलितान्तरेधमाना-
मित्राय [1]प्रणिपततो दिवस्त्रिशङ्कोः।
मित्राय क्षितिक्रमिता स एष विश्वा-
मित्राय व्यरचयतार्हणां यथार्हम् ॥ 57

गाधेयं परिणतमक्षिवारधेयं
काकुत्स्थः कनकक्रुतोन्नतासनस्थम् ।
आतन्वन्नयगुणवानदोनिदेशा-
दध्यास्त स्वयमपि हैमपीठमर्हम् ॥ 58

त्रैलोक्यप्रतिरचनान्यपद्मजन्मा
सम्मान्यस्स मुनिकुलेश्वरंस्तदात्वे ।
माधुर्योत्तररसवस्तुसृष्टिमन्यां
व्याकुर्वन्निव वचनं गभीरमूचे । 59

राजीवप्रियकुलराजराजधान्यां
शुद्धान्ते सुकृतपथे बुधेषु गोषु ।
अर्थेषु द्विपभटसैन्धवप्रवेशे
कल्यत्वं निवसति कच्चिदूर्जितं ते ॥ 60

जम्भारेर्युधि सहकारिणस्तवोर्व्या-
मम्भोदे [2]तदनुमतेऽनुकूलवर्षैः ।
सस्यालिं रचयति सन्ततं फलाढ्यां
प्रष्टव्यं किमु तदनामयं महीन्दो ॥ 61

त्वय्यद्य ध्रुवमवनीमवत्यपङ्कं
सर्वेषां प्रभवतु सत्पथैकवृत्तिः ।
धात्रीशप्रवर तथापि किं वदामः
साफल्यं भजति मनोरथाङ्कुराणि ॥ 62

1. प्रणिपतितो 2. तदनुमतेन कूलवर्षैः ।

अस्यैवं वचनमसौ निशम्य सम्यक्
प्रत्यूहं सवनविधेर्विधूय सद्यः ।
गीर्वाणप्रमुखसखः क्षितेरधीशः
कुर्वाणः सुखमिव कौशिकं बभाषे ॥ 63

प्राक् त्रातुः परमृषिबालकं मखे ते
दान्तेऽग्रेसरदयया विवृद्धिभाजाम् ।
शर्माण्याश्रमपदशाखिपोतकानां
पृच्छावान् परिकलयामि पौनरुक्त्यम् ॥ 64

तीर्थेषु स्थिरमितरेषु कुण्डिकां वः
सेवित्वा जगति सृजत्सु निर्मलत्वम् ।
भावत्काश्रमपदभाञ्जि निर्मलत्वं
तीर्थान्यादधति यदत्र किन्नु चित्रम् ॥ 65

स्यात्किं श्वापदचयधीस्तपस्विराज-
त्तातानां तनयसमं त्वया मृगाणाम् ।
शक्रोऽपि क्रतुषु विधातुमन्तरायं
वित्रस्येन्न किमु भवन्महत्त्ववेदी ॥ 66

त्रैलोक्यस्तुतचरितोऽपि तापसेन्दो
धन्यत्वं गमयसि धाम मामकीनम् ।
एतत्ते निरतिशयोदयो(दयो) वा
तादृग्वा जयति तपः फलं रघूणाम् ॥ 67

राजत्वे श्रियमनुभूय वस्तु वन्यं
मौनित्वेऽप्यनुभवते ददामि किं ते ।
भक्त्याऽहं धनमवनीमथापि दित्सा-
[1]स्म्यन्यद्वै तदनु गृहाण गाधिसूनो ॥ 68

---

1. स्म्यन्यद्वौ ।

इत्यस्मिन् ब्रुवति वसुन्धरासुधांशौ
ब्रह्मर्षिस्थितिमहिमानमेत्य पूर्वम् ।
आनन्दन् मनसि[1]यथा तथा तदानीं
सानन्दस्समुनिकुलाग्रणीरभाणीत् ॥ 69

अद्य त्वद्बलमवलम्ब्य सप्ततन्तुं
कर्तुं क्ष्माकमनशिखामणे यतेऽहम् ।
प्रत्यूहं सृजतिसुबाहुनात्र नीचो
मारीचोऽप्यहह विभावरीचरेषु ॥ 70

कोपाग्निर्हृदि परिदीप्य शापरूपं
रोषं सङ्घटयितुमेतयोस्तदानीम् ।
मेधा न प्रभवति मे धरामरुत्वन्
दान्तानां जगति गति[2]स्तथाविधा हि ॥ 71

[3]उद्वृत्तौ युधि मथितव्रतिव्रतौ [4]तौ
क्षेप्तारं क्षितिरमण [5]क्षपाचरेन्द्रौ ।
श्रीरामं गुणलतिकामतल्लिकाना-
मारामं वितर सलक्ष्मणं दयालो ॥ 72

धर्मात्मन् दशरथ धन्विलोकमौले
दद्याश्चेत्सुतमचिराय रामभद्रम् ।
कीर्तिस्ते जगति [6]भवेत्कृतिः प्रशस्या
वीरश्रीरपि विलसेद्वशंवदा ते ॥ 73

श्रुत्वा तद्वचनमरुन्तुदं महीभृत्
दम्भोलिप्रहृत इवौषधी [7]स दीनः ।
सद्यो हृद्गतमुरुगद्गदाक्षरोक्त्या
व्यावृण्वन्नथ वदति स्म मन्दमन्दम् ॥ 74

---

1. यथ 2. स्तया विधा भा. 3. उद्वृत्ता 4. तो 5. क्षपाचरेन्द्रा 6. भवेत्कृति-प्रस्शया 7. तदीनः

गाधेय प्रणतविधेय रामभद्रं
क्रीडातत्परमविमुक्तमातृपार्श्वम् ।
अस्त्रेष्वप्रथितमनीक्षिताजिरङ्गं
दातुं ते दमितिलक क्षमे कथं वा ॥ 75

अद्यापि स्फुरति परीमलो वचाया
मौनीन्दो मृदुलतरे कपोलभागे ।
बाल्यं तद्भवति वयोऽस्य काकपक्षं
पश्य त्वं निशमय वाचमप्रगल्भाम् ॥ 76

पुत्रोऽयं समभवदृश्यशृङ्गमौनि-
श्रेष्ठानुग्रहविहितैर्व्रतैश्चिराय ।
वर्तेऽहं वदनममुष्य वीक्षिता त्व-
त्कारुण्यादुपकृतिमीदृशीं विधेहि ॥ 77

नो चेदाश्रमपदमेत्य तावकीनं
चापेषुप्रवरधरश्चमूसमूहैः ।
अन्वीतः क्रतुनियमघ्नमाशु [1]विघ्नं
निस्तन्द्रो नियमिविभो निराकरिष्ये । 78

इत्युक्तो द्युमणिकुलेश्वरेण तेन
क्रोधं द्राक्कुशिकसुतः प्रवर्त्य चित्ते ।
आचख्यावतिपरुषाक्षरं विवृण्वन्
राजत्वं निजमपि विप्र(तां समात्ताम्) ॥ 79

पूर्वं भूरमण मनोरथस्य पूर्तिं
कुर्वेऽहं ध्रुवमिति निश्चितप्रतिज्ञः ।
पश्चात्त्वं भवसि न तादृशो मृषोक्ते-
र्वक्तारो न हि रघवो भवान्नु को वा ॥ 80

1. मघ्नं ।

सन्त्राणं सवनविधेः कियत्त्रिलोकी-
रक्षायै प्रभवति रामभद्र एषः ।
एतस्य प्रकटमवैम्यहं महत्त्वं
ते जानन्त्यपि वशिनो वसिष्ठमुख्याः ॥ 81

तावेतौ रजनिचराधमौ कियन्तौ
मद्गुप्तौ मनुकुलकेतुरेष रामः ।
[1]निःशेषान्नृपतिमणे निशाटनागान्
संहर्तुं हरिरिव सर्वथा पटुः स्यात् ॥ 82

बालोऽयं भवतु बलात्पलादिनौ तौ
भेत्स्यत्याहवभुवि रामभद्र एव ।
आगच्छेत् किमु वयसा पराक्रमश्री-
र्मिथ्योक्त्या किमिति मुधा दधास्यकीर्तिम् ॥ 83

स्तुत्यस्त्वं सचिवपुरोहिताप्तवर्गैं
राजेन्दो चिरमुपभुंक्ष्व राज्यभोगान् ।
अद्राक्षं तव मुखमध्वरस्य हेतो-
र्गच्छामीत्युदचलदाशु गाधिसूनुः ॥ 84

इत्यस्मिन् कुशिकसुते [2]सुदीप्तकोपं
बिभ्र(त्यद्‌भुत)[3]मचला चला बभूव ।
वित्रस्यन् मनसि तदा विमुञ्चति स्म
स्वं पर्वाप्यहह सुपर्वसार्वभौमः ॥ 85

कुप्यन्तं कुशिकसुतं विलोकमानो
मौनीन्द्रं तदनु महामुनिर्वसिष्ठः ।
सर्वज्ञो मनसि विचार्य भाविकार्यं
राजानं रघुकुलकुञ्जरं जगाद ॥ 86

1. निश्शेषान्यर्पात 2. ...पृकोदं 3. मचतां ।

पूर्वं संयमिवरपुङ्गवाय राजन्
अस्मिन् संसदि वितराम वो हितार्थम् ।
इत्युक्त्वा विरचयसे मृषैत······प्नौ
मार्तव्या·········न पंक्ति·········। 87

निःशेषान्निजमहसा निशाचरेन्द्रा-
न्निर्भेत्तुं प्रभवति रामभद्र एषः ।
गोप्ता चेत्तदुपरि कौशिको महात्मा
कल्याणं करगतमित्यवेहि राजन् । 88

सन्दे(हं सपदि) [1]जहीहि चात्मकृत्ये
मन्देहाहितकुल(च)न्द्र [2]रामचन्द्रम् ।
(अस्मै त्वं) [3]कुशिकभवाय देहि भूमा-
वाचारो विदिततरो भवेद्रघूणाम् ॥ 89

इत्युक्तो नरपतिरेष मूर्ध्नि जिघ्र-
न्नानीय स्वसविधमादराद्वयतारीत् ।
श्रीरामं कुशिकसुताय लक्ष्मणेन
[4]स्वाराज्ञे सुरमणिकल्पकाविवाब्धिः ॥ 90

तौ लब्ध्वा तरणिकुलोत्तमौ स मौनिः
सन्तोषादिव सहसा चतुर्भुजस्सन् ।
क्रव्यादौ क्रतु(वर)विघ्नमाचरन्तौ
दृप्यन्तौ मनसि तृणाय मन्यते स्म ॥ 91

गन्धर्वा [5]जगुरसमङ्भीरभेरी-
भाङ्कारो नभसि बभूव भूवरस्य ।
सम्प्रीत्यै सकलसुपर्वभिर्विमुक्ता
तत्काले समजनि दिव्यपुष्पवृष्टिः ॥ 92

---

1. जहीहीत्यम···कृत्य 2. रामचन्द्रः 3. यशिकभवाय 4. न्व···राजे······
···सुरमणिकल्पकाविमब्धः 5. जगुरग···ङ्भीर ।

आमन्त्र्य व्रतितिलकान् वसिष्ठमुख्या-
नाशीर्भिर्दशरथमाशु वर्धयित्वा ।
आदाय द्युमणिसमावमू कुमारौ
(गाधेयः) प्रमदरसाप्लुतः प्रतस्थे ।। 93

आगच्छन्नयमृषिपार्श्वसीम्नि रक्षो-
विक्षुभ्यज्जगदसु[1]दानरक्षितेति ।
श्रीरामे सुख[2]मकिरन्नथाब्जगन्धि
मघ्योद्यन्मधु हिमवारि गन्धवाहाः ।। 94

गाधेयः पुरनिकटे तटे सरय्वाः
स्थित्वा स प्रयतमतिं पतिं रघूणाम् ।
आ(हूय) [3]त्वम(ति)बलां बलां गृहाणे-
त्यस्मै ते[4]दनुजभिदावदात्तदानीम् ।। 95

ते विद्ये कुशिकतनूभवात्स गृह्णन्
तेजोभि[5]र्धृतमहिमा त्विषामधीशात् ।
लब्ध्वांशुं विधुरिव[6]लक्ष्मणानपेतो
रात्रिं तां रघुकुलराडलञ्चकार ।। 96

धन्विभ्यामथ रघुनाथलक्ष्मणाभ्या-
मन्वीतो निशि सरयूतटे मुनीन्द्रः ।
स्थित्वा तामुषसि तयो[7]र्मनोऽनुसारी
[8]धूतारी रथपदसम्मता[9]मतारि ।। 97

दूरं सद्रुतमयनं व्रती व्यतीत्य
त्रिस्रोतस्तटभुवि दृश्यमानमग्रे ।
कान्तारं किरिकरिभीकरं निरूप्य
श्रीरामं सहजसमेतमेतमूचे ।। 98

---

1. दात 2. मकिरन्नथाब्जभस्त्रिमध्यो 3. त्वव 4. दवद 5. धृतमहिम 6. लक्षणानपेतः 7. मनोऽनुसारि 8. धूतारि 9. मतान्तेः ।

क्रव्यादी कपटनिकेतनं सुकेतोः
वन्या सा[1]निवसति ताटका वनेऽस्मिन् ।
स्त्रीबुद्धिं मनसि युवां जहीतमस्यां
[2]काकुत्स्थौ विशिखमुखैश्च खण्डयेथाम् ॥ 99

इत्येतौ कुशिकसुतोदितौ प्रचण्डे
कोदण्डे घटितगुणे तदा विधाय ।
[3]हुङ्कारैरिव दलितान् हरिद्विटङ्कान्
टङ्कारैर्झटिति वितेनतुः कठोरैः ॥ 100

तूर्णं तद्ध्वनिमवकर्ण्य कर्णरन्ध्रं
रुन्धन्तं दिशिदिशि सा (दृशं) किरन्ती ।
[4]ज्ञात्वासाऽथ विचलदीक्षणा तदीयं
पन्थानं प्रसभमरुन्ध ताटकाऽग्रे ॥ 101

क्ष्वेलोद्यत्प्रतिरवकन्दरावनीभृ-
न्निस्साणप्रकटनिजागतिप्रकारा ।
विस्रास्रामिव······भ·········
छत्र·········प्रचो········ ···॥ 102

···························य···
···द्वक्त्रश्रीकुरवकरक्तनुन्नखाग्रा ।
शूलाग्रप्रसभविभिन्नतुंदिलालि-
हृन्मेदोमलयजचर्चितप्रतीका ॥ 103

सू . ··· ··· . ···············
···मरकरो········· . ···।
·····························
······ताशान्तस्थित मजातव······॥ 104

---
1. निवसिति 2. कौकुत्स्था 3. ठङ्कारैरिव 4. इं···नाभ···लदिक्षणा तदीयं ।

तां दृष्ट्वा पृथुककपालदामतारा-
मायान्तीमिव धृतविग्रहां तमिस्राम् ।
……किं नदण्ड……मारामो
……र……काण्डतो…… ॥ 105

इत्थमत्यर्थमिक्ष्वाकुभर्ता[1]मुहु-
स्ताटकापाटनापाटवान् नाटयन् ।
पूर्वमेवोर्वरापुत्रिकामेलना
द्वीरलक्ष्मीसमेतो विरेजेतराम् ॥ 106

(रामस्तस्मात्) संप्रहृष्टात्तदात्वे
मन्त्रग्रामं मौनिवर्याद्गृहीत्वा ।
आदायाम्भो वारिधेरुज्जिहानो
जह्रे तापं वारिदो वा जगत्याः ॥ 107

[2]मुरजारवान् मुहुरवादयन् विय-
त्सुरवारवारिजदृशो दृशोस्सुखम् ।
अमनागवापिषुरनल्पकल्पक-
प्रसवानवाकिरदमर्त्यमण्डली ॥ 108

तत्तादृक्कीर्तिलक्ष्मीनिधिमधिकजयप्राभवाल्लोभनीयं
रामं लोकाभिरामं रघुकुलजलधेः पर्वशर्वर्यधीशम् ।
दृष्ट्वा दृप्तात् स्वदृष्ट्योरनुजयुजममुं मूर्ध्न्युपाघ्राय तुष्ट-
स्तुष्टावेष्टार्थपूर्त्या[3]प्रतिभुवनविधापारगः पारिकांक्षी ॥ 109

1. महः 2. मुरवारवा मुहुरवारयन्वियत्सुर 3. प्रतिभुव विधापारगः ।

गाधेयस्य विधेयतामुपगतं गर्वान्ध साकेत..........
..........................दृष्ट्वा रघूणां पतिम् ।
पुञ्जीभूत[1]गुणो जयन्त्रिजगतीरञ्जी चिरं जीवता-
दित्थं वाक्सुम[2]वर्षतस्तमभजन् देवर्षयो हर्षतः ॥ 110

वीणावादकलाविनोदसमये धृत्वा समस्याः शतं
सद्यस्संसदि साधु पूरयति या दत्ताः कवीन्द्रैस्तया ।
देव्योद्यन्मतिसख्यया मधुरवाण्यम्बाख्यया निर्मिते
श्रीरामायणसारकाव्यतिलके सर्गोऽभवत्पञ्चमः ॥ 111

इति श्रीरामायणसारकाव्यतिलके

पञ्चमः सर्गः



1. गुणे 2. वर्षदः ।

# श्रीरामायणसारकाव्यतिलके

## षष्ठः सर्गः

गाधिसूनुरथ गाढकौतुको
रामलक्ष्मणसहायपार्श्वभूः ।
सिद्धसाध्यनुतमिद्धमाश्रमं
सिद्धपूर्वमगमद्धरोपमः ॥ 1

पुष्पपांसुरसपल्लवप्रभा
मन्दवाततरुमध्यभाग्दिवः ।
यत्र भान्त्यपरविश्वसृष्टये
कौशिकेन कृतिनार्जिता इव ॥ 2

नार्थयध्वमनिलं निरुध्य नः
सादिवर्ग्यमिति सांत्वनाय किम् ।
यत्र नित्यमनुसृत्य योगिनः
सञ्चरन्ति हरिणाः समन्ततः ॥ 3

देवतार्चनविधौ तपस्विनां
घण्टिकाघणघणावकर्णनात् ।
यत्र नृत्यति शिखण्डमण्डली
चञ्चरीकपटली च गायति ॥ 4

भूतिलिप्तवपुषो जटाजुषो
योगिनो मृगभृतो यदन्तरे ।
व्याघ्रवेषदनुजान्तकाः किमि-
त्यासते मृगसखा मृगादनाः ॥ 5

यत्र चित्रतृणधान्यमण्डलं
तण्डुलं रचयतो नखाञ्चलैः।
सिंहशाबसदसः श्रमच्छिदां
कल्पयन्ति कलभाः श्रवोनिलैः ॥ 6

राम्भवैभवमुदञ्चति श्रियं
कल्पयन्ति शुभकल्पकद्रुमाः।
देदिवीति सुरभीर्दिवानिशं
यत्र कौशिकपदेऽर्हमेव तत् ॥ 7

हस्तिनो ददति यत्र मौनिना-
मब्जिनीदलपुटाहृताम्भसा।
अब्जमामरधुनेः सुरार्चने
युज्यते खलु मतङ्गजेषु यत् ॥ 8

यत्र केऽपि तरवो जटायुताः
सङ्गताश्च करकैर्जपान्विताः।
आचरन्ति [1]मरुदध्वरोधका
मौनिसंसदनुकारनाटिकाम् ॥ 9

यत्र[2]वामनपदायितोऽनुया-
त्युन्नतद्रुमसुम[3]स्रवन्मधुः।
पल्लवो विधिकमण्डलुस्रव-
द्गाङ्गपूरघटितं (हरेः) पदम् ॥ 10

सङ्गतःशिखिमुखैर्यदाश्रयं
नैव सन्त्यजति देववल्लभः।
गाधिसूनुगरिमाद्भुत[4]स्मृते-
र्जालजालपुलकैस्तरङ्गितः ॥ 11

---

1. मरुदध्वरोधकौ 2. वामनपदायितेनुयात्युन्नत 3. स्रवन्मधु 4. स्मृतर्जाल।

···ष्क···दाल्वयितुः शतक्रतो-
दर्पभञ्जनकृते·····पनम् ।
इत्युपेत्य·········दृढसम्मदाः
सञ्चरन्ति शनकैः समीरणाः ॥ 12

आगतौ नृपसुतौ किमीक्षितुं
चूतसौधमधिरुह्य वल्लिकाः ।
जालवर्त्मकलिकालिलोचना
भान्ति यत्र सवयोमुखोदिताः ॥ 13

आश्रमेषु रघुराट्पदार्पणात्
[1]पावनः प्रथममस्मि मत्समाः ।
नान्य इत्ययति योऽशुभत्फला
पंक्तिलौल्यकपटेन ताण्डवम् ॥ 14

दुष्कृतानि [2]पुरुषत्रयात्मकान्
सप्रदक्षिणकृतः स्पृशन्ति नो ।
इत्यजस्रदललोलताच्छलात्
यत्र बोधितरवो विवृण्वते ॥ 15

प्राप्तवान् बहुलशक्रमान्यतां
प्रायशो बलिकृतप्रसाधनः ।
[3]वीतकैतववटुश्रिताद्भुतं
भाति यः [4]कपटवामनाश्रमः ॥ 16

अर्यमार्पितदृशामहर्मुखे
यत्र जाग्रति फलेऽग्रजन्मनाम् ।
बिम्बमस्य भजतां स्वमस्तकैः
शाखिनां किमु फलानि सन्ति नो ॥ 17

---

1. पावनाः 2. पुरुषत्रयात्माकः 3. वीतकैतववटुः 4. कपटवामनाश्रमम् ।

सन्ति केऽपि सरलाश्चकासति
श्रीफलाः कतिचनातिमुक्तकाः ।
भान्ति केचन परे सुवर्णका
यत्र जाग्रति सदाश्रयात्परम् ॥ 18

आक्रमन् तमतुलांशुमत्फला-
शीतलानिलपलायितश्रमः ।
एष दाशरथिरेत्य सानुजः
कौशिकस्य हृदि कौतुकं न्यधात् ॥ 19

रामलक्ष्मणमनुक्षणं मुदा
तं सलक्ष्मणमवेक्ष्य राघवम् ।
इष्टमेधयति नो मनूत्तमं
सत्यवाक्यमपि तत्र मेनिरे ॥ 20

एष नः सुखमदर्शयत्परं
धाम राममिति तापसोत्तमाः ।
कौशिकं गगनकंशिकं हृदा
देशिकं कृतधियो व्यतर्कयन् ॥ 21

रामहस्तधनु(रा)जयन्मनो
गाधिजस्य गरिमोत्तरैर्गुणैः ।
[1]सप्ततन्तुविधिरक्षणे स्वयं
दीक्षितो विनयवागभाषत ॥ 22

यज्ञरक्षणविचक्षणाः स्वयं
पारिकांक्षिचरणाः कृपावशात् ।
यूयमानयत मां यथाविधि
प्रारभध्वमिह कर्तुमध्वरम् ॥ 23

1. सप्ततन्तुविधिरक्षणैः ।

इत्युदीरयति लक्ष्मणाग्रजे
शासनात् कुशिकजस्य हृष्यतः ।
ऋत्विजः शमयुजः समाययुः
सामऋग्यजुषशीलनाजुषः ॥ 24

यज्ञवाटमिदमाज्ञया नय-
न्निष्टकाः कतिचिदिष्टकारिणीः ।
वेदिकां विदधिरे परे तदा
वस्तुपूर्तिमितरे वितेनिरे ॥ 25

स्थापयन्नथ हुताशनत्रयं
सैष तुर्य इव पावकः स्वयम् ।
दीप्तिभिर्दश दिशः प्रकाशयन्
कर्तुमारभत कौशिकः क्रतुम् ॥ 26

मन्त्रघोषमहिमा नभः क्रमात्
प्राप होमसमयप्रसृत्वरी ।
धूमसन्ततिरथ प्रवर्ग्यता-
जातर्मचिरपि जातवेदसः ॥ 27

तद्विलोक्य दिवि ताटकासुतो
[1]वर्मितः शरवरूथिनीवृतः ।
सूदिताखिलयतिः सुबाहुना
साकमागमदथोग्रबाहुना ॥ 28

आस्थितो दिवमनीकिनीकन-
च्चन्द्रहासचपलाकलापवान् ।
कालमेघ इव काण्डवृष्टिभिः
[2]कम्पयन् पटु जगज्जगर्ज सः ॥ 29

1. वर्मिता 2. कम्पयन्नट्टु ।

अस्रवर्षमनयन्नितस्तत-
[1]स्तद्भटा मखगृहं मदोद्भटाः ।
एतदेव निरणायि तद्वधू-
लोचनास्रभरवर्षकारणम् ॥ 30

यज्ञवाटपरिपाटनोद्यता-
स्तर्मनिर्मथनकर्मसोद्यमाः ।
तेऽभवन्नधिकतेजसां निधौ
गाधिजे नियमभाजि पश्यति ॥ 31

त्रस्यदाशयसदस्यमाकुलो-
द्गातृ भीति(भर)होतृकं तदा ।
प्रद्रुतातिथिजनं परिप्लवा-
ध्वर्यु चाप्यभवदाध्वरं सदः ॥ 32

इत्थमार्दमृषिसार्धमृत्विजो
विह्वला·········विलोक्य [2]राघवः ।
············ ······वर्म कार्मणं
धर्ममर्मविदधिज्यमातनोत् ॥ 33

स क्षपाटनभटानपाटयत्
पाटवात्कटु[3]निपातकोटिभिः ।
[4]चण्डभानुकुलसिन्धुचन्द्रमा-
श्चण्डमारुत इवाभ्र(माशुगैः) ॥ 34

(राघवस्तदनु) मानवाधिपो
मानवास्त्रपवमानवेगतः ।
तूलराशिमिव ताटकासुतं
नीरराशिपयसि न्यपातयत् ॥ 35

1. तद्भटीमखगृहं मदोद्भटः 2. राघवौ 3. विपात 4. चंचलानुकुल ।

राघवाशुगविशेषलाघवा-
[1]त्तं तथा पतितमम्बुधौ परे ।
ताटकातनयमेक्ष्य राक्षसाः
सागरं भयभराज्जगाहिरे ॥ 36

पावकास्त्रपटुहेतिमण्डले
माननीयमहिमा स राघवाः ।
बाहुलेयसदृशं सुबाहुम-
प्याशु दीप्तककुभाहुतिं व्यधात् ॥ 37

[2]एवमुग्रसमुदग्रसाहसान्
राक्षसान् युधि विदार्य राघवः ।
ध्वान्तबृन्दमवधीरयन् रया-
द्भानुमानिव बभौ कुलप्रभुः ॥ 38

[3]इत्थमिद्धभुजधाम्नि राघवे
लक्ष्मणेन सह रक्षति क्रतुम् ।
अन्तरायरहितं [4]तमातनो-
दन्तरायतधृतिः स कौशिकः ॥ 39

स्वस्ति शस्तमवदत् पितामहो
नृत्यति स्म निपुणं महानटः ।
वैणिको व्रतिवरश्च संजगौ
संमदाद्रघुपतेर्जयोत्सवे ॥ 40

एकयज्ञपरिपालनं रघु-
स्वामिना रचितमेव सादरम् ।
जज्ञिरे शमधनाश्शतक्रतु
त्राणमात्मनि तदा तदाश्रमे ॥ 41

---

1. त्तंतु धावति तमं बुधौ परे 2. एवमूग्र 3. इत्यमित्य 4. तमातनोः ।

दोर्युगेन [1]नवनीतवासना-
गाहिना स परिरभ्य गाधिभूः ।
अस्तवीररिपुमस्तवीद्गिरां
विस्तरैरमुमहस्करान्वयम् ॥ 42

राम राक्षसविराम सद्गुणा-
राम धन्यमिदमाश्रमं चिरात् ।
सुप्रसिद्धमभवद्धरातले
वर्णगौरवपदं त्वदाश्रयात् ॥ 43

कर्म निर्मितमिदं मयाधुना
साप्ततन्तवमनाहतं तव ।
विक्रमेण रघुवीर भूरिशो
भूतले दिवि च तोषिता बुधाः ॥ 44

इत्युदीर्य निवसन्तमन्तिके
प्रश्रयानतशिराः स राघवः ।
वन्दते स्म सहजेन सज्जना-
नन्दनः कुशिकनन्दनं तदा ॥ 45

कौशिकः करयुगेन तं समु-
त्थाप्य हर्षरसपारवश्यतः ।
रामनाम समुपेयिवान् वरः
पूरुषोऽयमिति पर्यरब्ध सः ॥ 46

रामगात्रपरिरम्भधन्यता-
प्राप्तये तदवलोकनाय च ।
कौतुकादुभयथा तपोधनाः
[2]कौशिकत्वमभिलेषुराशये ॥ 47

1. नवनीतदासना 2. कौशलत्व ।

तादृशं तरणिवंशभूषणं वीक्ष्य विक्रममिवात्तविग्रहम् ।
हृष्टवान् हृदि मर्हषिरब्रवीद्विष्टपप्रतिविधाविशारदः ।। 48

मैथिलस्य जनकप्रभोर्मखो मानितो जयति मौनिभिर्वयम् ।
तत्र यातुमधुनोद्यतास्त्वमप्येहि[1]लक्ष्मणसखो रघूद्वह ।। 49

ऐश्वरं धरणिजार्पणापणं तत्र चापमवलोकयिष्यसे ।
इत्युदीर्य रघुवर्यसङ्गतो गच्छति स्म सह गाधिजो द्विजैः ।। 50

ते विलंघ्य पदवीं दवीयसीं तिग्मरोचिषि दिनार्धमेयुषि ।
जाह्नवीं तटवतीशिखामणीमाश्रितां मुनिजनैरलोकयन् ।। 51

ते वियच्चरतरङ्गिणीजले निर्मले कृतनिमज्जनक्रियाः ।
पावनात्मवपुषः समुन्मिषत्तोषमापुरदसीयरोधसि ।। 52

श्रोतुमुत्तमयते यते वियत्सिन्धुवृत्तमिति रामचोदितः ।
कौशिकोऽजनि कुतूहलेन तज्जन्मवृद्धिकथने समुद्यतः ।। 53

अस्ति राम हिमवान् [2]महौषधी(संश्रयो) महिमवान् महीधरः ।
सर्वदिव्यमणिसंसदाकरः श्रीकरः श्रितवतां सुपर्वणाम् ।। 54

कन्यकाद्वयमगण्यकान्तिभिर्धन्यमस्य महिभृत्पतेरभूत् ।
अर्थितस्त्रिपथगां [3]स पावनी[4]म(भ्यदात्तव हि पूर्वजाय ताम्) ।। 55

सर्व [5]एव परिगृह्य तां नदीं जाग्रतीं जगदभीप्सितार्पणे ।
निर्जरास्समभवन्निरन्तरानन्दकन्दलित(मान)सादराः ।। 56

तन्वतीं गुरु तपस्तथानुजां [6]कन्यकां (कमलपत्रलोचनाम्) ।
[7](शम्भवे)त(द)नु पार्वतीं(मुदा)दत्तवान् स धरणीधराग्रणीः ।। 57

---

1. लक्षणसखो 2. महौषधि 3. न 4. व... 5. एष 6. कन्यकां...लग... 7. तनु... ...पार्वतीं-- ।

पाणिनाऽथ परिगृह्य पार्वतीं शीतदीधितिशिखामणेस्तया ।
रागतो रचयतो [1]रतोत्सवं (दिव्य)वत्सरशतं गतं क्रमात् ।। 58

विह्वला विधि[2]पुरस्सरास्सुराः भूतमुत्थितमितः क्षमेत कः ।
इत्थमात्मनि विचार्य तत्क्षणं फालनेत्रमभणन् प्रणम्य ते ।। 59

देवदेव शिव धारयस्व ते दिव्यतेज इदमात्मतेजसि ।
इत्थमर्थपतिमित्रमध्वराहारिणं समवदन् दयानिधिम् ।। 60

प्रार्थितो दिविचरैः[3]पुरंद्विषन् तेज एष कृपया क्षितौ न्यधात् ।
सा च धर्तुमिदमक्षमा मरुद्बान्धवे स च सुधान्धसां धुनौ ।। 61

सा च हैमवतपादसीमनि न्यस्यति स्म तदनेन तेजसा ।
भर्मरूपमजनिष्ट भास्वरं तद्गतं शरवणं समन्ततः ।। 62

नन्दनो विजयभूरभूत्ततस्तं कुमारमवलोक्य निर्जराः ।
स्तन्यदानविधितत्पराशयाः कृत्तिकाः कृतमुखा न्ययोजयन् ।। 63

स्कन्द एष हुतवाहनन्दनस्तासु षट्सु कुतुकी षडाननः ।
स्तन्यपानमतनोदसौ ततः कार्तिकेय इति कीर्तितोऽभवत् ।। 64

तं कुमारमविशङ्कमाहवे पङ्कजोद्भवमुखा मखाशनाः ।
दैत्यसन्तमसदारणाविधौ चक्रुरर्कसदृशं चमूपतिम् ।। 65

कामितप्रदमिदं चिदास्पदं कार्तिकेयचरितं कविस्तुतम् ।
यः शृणोति यशसा समन्वितः पुत्रपौत्रसहितश्चकास्ति सः ।। 66

अर्पितां सुरगणाय तामिमामापगामतिरथो भगीरथः ।
आन[4]यद्वसुमतीं तपश्चरन्नात्मवंश्यनृपतारणाकृते ।। 67

---

1. रतोत्सव 2. पुरस्सरासुरा 3. पुरंद्विषं 4. वसुमतिं ।

इत्थमुक्तवति गाधिनन्दने राघवौ हृदि ननन्दतुस्ततः ।
तेरुवल्लहरिकां महापगां तेरुरिन्दुधरमौलिमालिकाम् ।। 68

तां विलंघ्य भुवनत्रयीहितामागतान् पथि ततः क्रमादिमान् ।
सोऽभिपूज्य सुमतिर्विशांपतिः सार्थकं स्वमभिधानमादधात् ।। 69

शीर्णयूपमवकीर्णवेदिकं दीर्णकुण्डिकमुदीर्णकत्तृणम् ।
जीर्णमाश्रममपर्णपादपं तूर्णमेत्य निरवर्णयन्नमी ।। 70

गौतमो विमुमुचे महायतिर्मामितीव ववृते त्रपावती ।
बिभ्रती यदवनी मिथोमिलद्वल्लिगुल्मवलयावकुण्ठनम् ।। 71

अस्य शश्वदवलम्बनाय को न्वागमिष्यति कदेत्यनुक्षणम् ।
मार्गयन्त इव यन्मृगा दृशं चक्रिरे प्रतिदिशं भृशं कृशाः ।। 72

मारुतं बुभुजिरे निजाशनं प्राङ्महर्षय इवेत्यमर्षतः ।
व्याप्नुवन् फणभृत[1]स्तदाश्रमं यं द्रुमाकलितकञ्चुकध्वजाः ।। 73

ईदृशीमभजदिन्द्रतो दशां तस्य सञ्चरणहेतुरम्बुदः ।
मूलमस्य किल धूम इत्यमुं वर्जयन्नु ववृते चिराय यः ।। 74

यन्मही यतिविवर्जिता परं नीरसा मुखरकाकविश्रुता ।
अध्वनि स्फुटतरं स्म वर्तते कल्पिताकृतिरिवामनीषिणा ।। 75

आगताः सममशेषमौनिभिर्गाधिसूनुरघुनाथलक्ष्मणाः ।
मैथिलोपवनमार्गमास्थितं तादृशं प्रविविशुस्तपोवनम् ।। 76

एतदाश्रमपदं व्रतीश्वरैर्वर्जितं किमिति लक्ष्मणाग्रजे ।
प्रश्नकारिणि स[2]पारिकांक्षिराट् तत्र वक्तुमुदयुंक्त तत्कथाम् ।। 77

---
1. तदाश्रयं 2. दारिकांक्षिराट् ।

गौतमस्य यतिनस्तपोवने(तन्मुनाववसति त)त्र वृत्रहा ।
एत्य तद्वपुरहल्यया सह क्रीडति स्म कितवः स्मरार्दितः ॥ 78

तद्विमृश्य हृदि तापसाग्रणीर्देवराजमवलोक्य(दूषि)ताम् ।
एधि चात्र[1]दृगलक्षितेत्यसौ शान्तधीरपि शशाप कोपतः ॥ 79

भूय एव स यतिर्दयार्द्रधी रामभद्रसमुदीक्षणक्षणे ।
पूततामधिग[2]मिष्यसीति तामीरयन् हिमगिरेस्तटीमगात् ॥ 80

इत्थमालपति गाधिनन्दने रामपादरजसा तथैव सा ।
दृश्यते स्म धुतकल्मषा तदा राहुणा विधुकला यथोज्झिता ॥ 81

[3]गौतमव्रतिवरस्य गेहिनीं प्राप्तवत्यहह तामदृश्यता ।
मध्यसीमनि कदापि[4]नाजहाद्दुस्त्यजःखलु सुहृज्जनाश्रयः ॥ 82

दृश्यते सकृददृश्यतां गता शापरूपतिमिरेण सा पुनः ।
राघवाङ्घ्रिनखचन्द्रधाम्नि तत्किन्नु चित्रमिति केचिदूचिरे ॥ 83

शार्ङ्गिणः पदमसूत कन्यका[5]मप्रथां रघुपतेः पदन्त्विदम् ।
नन्दनामिह सतीपुरःस्तुतां पावनीमिति परे बभाषिरे ॥ 84

प्रायशो जगति जीवनाद्भवेत् पद्ममत्रपुनरास जीवनम् ।
श्रीपदाद्रघुवरांघ्रिपद्मतः चित्रमेतदिति केऽप्यवादिषुः ॥ 85

गौतमाय मुनये कुटुम्बिनीं दत्तवान् रघुपतिर्दयानिधिः ।
शीघ्रमस्य भविता करग्रहश्रीरिति स्म कथयन्ति केचन । 86

[6]इत्थमीरितवति व्रतिव्रजे तत्र गौतमयतिः समागतः ।
राघवाय नयराशिराशिषं दाशति स्म दमिलेखशाखिने ॥ 87

1. दृगलक्षिकेत्यसौ 2. गमिष्यतीति 3. गौतमव्रतवरस्य 4. नाजहादुस्त्यजः
5. मप्रथा 6. इत्यमीरितवति ।

चक्रवाक इव चक्रवाकिकां दीनताविरहितां दिनागमे ।
वीक्ष्य शापविगमान्मनोरमां पूर्वतोऽपि स जहर्ष तां वधूम् ।। 88

एकिकैव यतिनो मृगेक्षणा सा त्रपाभरनताननाऽभवत् ।
उन्मुखत्वमभज[1]न्मुदेक्षितुं विस्मयेन निखिलाश्च तां जनाः ।। 89

जम्भशासनजयानकैस्तदा सस्वने दशदिशास्वनेकधा ।
तोषतस्तु[2]सितभास्वरानिलाः पुष्पवर्षमपुषन् पुनःपुनः ।। 90

गौतमव्रतिवतंसकूकुदं पादनीरजरजः प्रवर्तयन् ।
पङ्कजाप्तकुलपुङ्गवस्ततः पश्यति स्म मिथिलापुरं पुरा ।। 91

वितानपरिलम्बितोत्पलवितानसन्दानितं
विनूतननिकेतनाकलितकेतनालंकृतम् ।
मृदङ्गपटहार्भटीमुखरगोपुरं तत्पुरं
प्रशस्तमवलोकयन् प्रमुमुदे रघूणां पतिः ।। 92

मखमीक्षितुमागतान् बुधान्
विविधांस्तत्र विलोक्य राघवः ।
जनकं जगतीबिडौजसं
जनितोदर्कमतर्कयत्तदा ।। 93

इक्ष्वाकेन्दोर्दक्षिणं चक्षुरात्म-
स्पन्दाद्वामस्यापि नेत्रस्य भावि ।
तत्राशंसीद्भूसुतालोकसौख्यं
तादृक्षः स्याद्दक्षिणस्य स्वभावः ।। 94

1. न्मुदीक्षितुं 2. शित ।

जनकधरणीजानिर्गाधेयरामसमागमं
शुभकरमथ श्रुत्वा तत्तादृशं हृदि कौतुकम् ।
अधिकमिथिलामध्यासीना जना निमिसन्तते-
र्नृपकुलसमुत्कृष्टं दिष्टं प्रतुष्टुविरे तराम् ॥ 95

[1]प्रख्यातार्जवया पदार्थगमकव्याख्यानपक्षान्वय-
[2]प्रागल्भ्यास्पदनैषधप्रतिविधासानन्दसूरीन्द्रया ।
देव्योद्यन्मतिसख्यया मधुरवाण्यम्बाख्यया (निर्मिते)
श्रीरामायणसारकाव्यतिलके सर्गोऽत्र षष्ठोऽभवत् ॥ 96

इति श्रीरामायणसारकाव्यतिलके

षष्ठः सर्गः



1. प्रख्यातार्जवयावदर्थं 2. प्रागल्भास्पद ।

# श्रीरामायणसारकाव्यतिलके

## सप्तमः सर्गः

नन्दन् शतानन्दमृषीश्वरं पुरो
विधाय सोऽयं विधिवन्निमीशिता ।
प्रत्युद्गतस्तत्र सरामलक्ष्मणं
गुणाधिकं गाधितनूजमार्चयत् ॥ 1

सानन्दमेनं दमिनं स पूजयन्
जयन्विनीत्या जनकक्षितीशिता ।
कृत्वा मणीपीठगतं तदाज्ञया
यथार्हपीठे निवसन्नथाब्रवीत् ॥ 2

[1]गाधेय वन्दारुनिधे तवागमात्
कुलद्वयं मामकमेति धन्यताम् ।
अक्षिद्वयं तावकदर्शनोत्सवात्
समश्नुते सम्प्रति नैव साहितीम् ॥ 3

कोदण्डतूणीरकृपाणधारिणा-
वमू कुमारौ सुकुमारविग्रहौ ।
भास्वन्मृगाङ्काविव भव्यतेजसौ
निवेद्यतां कौ निरवद्यलक्षणौ ॥ 4

एवं निमीशे ब्रुवति [2]व्रतीशिता
त्रिशङ्कुनव्यत्रिदिवप्रदायकः ।
प्रागेव तस्यावभृथाम्बु[3]मज्जनात्
सृजन्निवाज्याद‌मृतावगाहनम् ॥ 5

[1] माधेयमन्दारुनिधे [2] प्रवीशिता [3] मज्जना ।







इक्ष्वाकुवंशे जयतीह पूर्णस-
न्मनोरथः पंक्तिरथो महारथः ।
पुत्रौ तदीयौ पुरुहूतपौरुषा-
विमौ हृदा धारय रामलक्ष्मणौ ॥ 6

नीतौ मयैतौ परिपातुमध्वरं
पथि क्षुरप्रैः प्रविभिद्य ताटकाम् ।
सिद्धाश्रमे पार्थिव चक्रतुः क्रतु-
प्रमाथिमारीचसुबाहुमर्दनम् ॥ 7

चण्डीपतेश्चण्डकरं शरासनं
निशम्य भूमी(श तदीक्षणोत्सुकौ) ।
इक्ष्वाकुवीराविह पूरुषोत्तमौ
सतां मतावागमतां मयादृतौ ॥ 8

आगच्छतो वर्त्मनि ताटकारिपो-
रमुष्य रामस्य पदाब्जपांसुना ।
अन्तर्हिता गौतम(धर्मगेहिनी)
(निन्ये स्वमूर्ति रुचिरां य)थापुरम् ॥ 9

(ततश्च वज्र)प्रतिमेन तत्क्षणं
बभूव मेघाध्वनि वाद्यनिध्वनिः ।
देवर्षयो हर्षभरं प्रपेदिरे
नटन्ति च स्माप्सरसो रसोत्तरम् ॥ 10

एवंविधां कर्णपथातिथिं कथां
कृती[1]शतानन्दयतेर्विधाय सः ।
संख्यातिगानन्दरसः सनातनं
तदा शतानन्द[2]मथात्यवर्तत ॥ 11

1. शतानन्दयती विधाय 2. मधात्यवर्तत ।

सोऽयं व्रती गौतमसूनुरादरात् बभाण रामं बहुधा परिष्टुवन् ।
प्राप्तोऽस्मि भाग्येन रघुप्रभो तपोगरीयसा [1]गाधितनूभुवा समम् ।। 12

ब्रह्मर्षिरेषः प्रतिसृष्टिशक्तिमाननन्यसामान्यनिजप्रभावतः ।
एतस्य वृत्तं जगदद्भुतप्रदं रघूत्तमाकर्णय सन्मनोरमम् ।। 13

जज्ञे [2]विधेः शात्रवसिन्धुराङ्कुशः कुशस्ततोऽभूत्कुशनाभ इत्यतः ।
आसीत्कृती गाधिरिति क्षितीशिता मृगाधिराजाधिकविक्रमक्रमः ।। 14

तस्यात्मजोऽसौ तटिनीशमेखलां नयेन रक्षन् निखिलां कदाचन ।
कुर्वन् मृगव्यं कुतुकी खलान्वितो ययौ वसिष्ठस्य गरिष्ठमाश्रमम् ।। 15

तस्मिन्नसौ तस्य मुनेरनुज्ञया प्रणीतमिष्टं शबलाप्रसादतः ।
मृष्टाशनं प्राश्य मितेतरोच्छ्रयां गृहीतुमैच्छत् शबलां बलादमूम् ।। 16

अह्नाय सामर्षममुष्य गृह्णतो बलानि सर्वाणि बलारितेजसः ।
शातास्त्रहस्ताः शबलाङ्गसम्भवाः शकाः पुलिन्दाश्च तदा व्यदारयन्।। 17

तद्वीक्ष्य फालाक्षमुपास्य तद्वरस्फुरन्महास्त्रः पुनरप्यनीकयन् ।
वासिष्ठदण्डेन स एष दण्डितः सहेत कः शक्तिगुरोर्महन्महः ।। 18

गाढं तपस्यन्नथ गाधिभूरसौ हिमाद्रिपादेष्वपि पुष्करेष्वपि ।
सर्वामराणामपि साध्वसावहं महानिदानं महिमानमावहे ।। 19

वसिष्ठशापादभिभूततेजसो भृशं त्रिशङ्कोस्त्रिदिवं नवं दिशन् ।
सोऽयं तदानीं सरूषं वलद्विषं चकार हुंकारगिरा निराकृतम् ।। 20

आर्तं मुनेरात्मजमम्बरीषभूशतक्रतोरेष वितानकर्मणा ।
संत्राय मंत्राकलनाविशेषतो जगाम कीर्ति जगदद्भुतावहाम् ।। 21

---

1. गाधितनूभवा 2. विधे ।

धातुस्तदानीं तपसा प्रसेदुषो दयावशात् बाहुजतां त्यजन्नयम् ।
ब्रह्मर्षितां प्राप वसिष्ठसम्मतां विहाय बाल्यं युवतां भजन्निव ॥ 22

एतादृशः कौशिक एष देशिकस्तवाभवद्राम दयार्द्रधीस्ततः ।
अद्यैव कल्याणममूल्यमाप्नुयाः फलाय भूयात् गुरुपादसेवनम् ॥ 23

इत्याक्षपादेन समस्तमीरितं वचो निशम्य श्रवसो रसायनम् ।
राजा निमीनां रचिताञ्जलिस्ततो जगाद गाधिप्रभवं तपोभुवम् ॥ 24

अग्रे ककुत्स्थाभिजनाग्रगण्ययोः श्रुतं भवद्वृत्तमनुत्तमं मया ।
धन्योऽस्मि नान्योऽस्ति नृपेषु मत्समो विधेय गाधेय(किमीप्सितं हि ते)॥25

सुखैकहेतुर्भगवंस्त्वदागमः करोमि किं वा करुणाऽस्ति चेन्मयि ।
आज्ञापय क्षिप्रमहर्पतिद्युते त्वया नियोज्योऽहमतर्क्यशक्तिना ॥ 26

एवं समाख्याति सति क्षितिक्षिति क्षितीश्वरा(नन्दकरः प्रसन्नधीः) ।
वेधाः प्रतिस्वर्गविधौ महामहा बभाण रामं प्रमदं नयन्नयम् ॥ 27

आलोकितुं कार्मुकमैन्दुशेखरं समुत्सुकौ सम्प्रति रामलक्ष्मणौ ।
कन्यामणीशुल्कमिदं महत्तयोर्मुदे विदेहाधिपते प्रदर्शय ॥ 28

तस्मिन् ब्रुवाणे तपसां निधौ तदा पुरःस्थितान् वीक्ष्य स मन्त्रिपुङ्गवान् ।
आनीयतामर्चितमैश्वरं धनुः पुरादिहेति न्यदिशद्विशां पतिः ॥ 29

तेषां गिरा भारवहा महाबलाः सहस्रसंख्याः पटुपेटकस्थितम् ।
अन्यूनमानिन्युरनन्यजद्विषः शरासनं राजकपर्दशासनम् ॥ 30

पेटीपुटस्थं पृथु तैः प्रदर्शितं जनैर्नरेन्द्रस्य तदा मनुप्रभोः ।
सन्दर्शनेन स्तिमितः फणीव तद्धनुर्नृणां साध्वसकौतुके व्यधात् ॥ 31

अस्येक्षणे चञ्चलनेऽधिरोपणे विकर्षणेऽप्यक्षमतां गता नृपाः ।
सन्नद्धमैक्ष्वाकमवेक्ष्य तत्क्षणादलक्ष्यफालाक्षमतर्कयन् हरम् ।। 32

नेता रघूणामथ कौशिकाज्ञया करेण पस्पर्श तदैशमायुधम् ।
हस्ते करिष्याम्यवनीतनूभवामितीव सत्यापयितुं सतां पुरः ।। 33

तत्कार्मुकं पेटकमध्यमास्थितं पती रघूणां जनकक्षितीशितुः ।
अग्रे स जग्राह करेण रंहसा जहाति धर्मं किमु धर्ममर्मवित् ।। 34

आदाय हस्तेन [1]शरासनं तत् सजीवमिक्ष्वाकुवरश्चकार सः ।
एतच्छिलामस्य पदाब्जपांसुना सजीवतां नीतवतः किमद्भुतम् ।। 35

आमोदमाने जनकेन्द्रमानसे चकर्ष रामः सुमनश्शरासनम् ।
आमोदमाने जनकात्मजाशये चकर्ष रामः सुमनश्शरासनम् ।। 36

आकृष्य रामोऽच्छिन[2]दैश्वरं धनुस्तदेव धूतस्वगृहस्य रक्षसः ।
भङ्गं प्रतर्क्य प्रमनाः शिवोऽभवत् कथं न सर्वज्ञमतिर्वि[3]मर्शिनी ।। 37

पुण्ड्रेक्षुभञ्जं रघुकुञ्जरो यथा बभञ्ज हस्तेन बलोच्छ्रितो धनुः ।
सर्वे जनाः संसदि कुम्भिनीभवां मनस्यमन्यन्त तदैव तद्वशाम् ।। 38

एतन्निमिस्वामिकुमारिकामणेर्वलग्नसाम्यं वहतीति किं क्रुधा ।
[4]रामः स्वभिन्नैकशरासनस्वनात् [5]वियत्तदानीं विददार दारुणात् ।। 39

स्फीतेन तेन ध्वनिना दिशास्पृशा मुहुर्मुहुः पूर्णमहागुहामुखौ ।
प्रालेयरूप्याद्रिवरौ रघुप्रभोर्जयाङ्कशङ्खाविव नेदतुस्तदा ।। 40

रोधोऽन्तरं तद्ध्वनितेन रून्धता सरस्वतः क्षोभवतस्ततस्ततः ।
फेनो [6]विशीर्णो विववार तद्वसद्दशास्यकीर्तेर्विशरारुतामिव ।। 41

---

1. शरानलंस्ततं 2. देश्वरं 3. विमर्शिनि 4. रामस्त्वभिन्नैक 5. वियत्तदानी–
6. विशीर्णे ।

तन्नादकम्प्रक्षितिलोलपादपोद्गतालिसंगीतमुपाङ्गतां गतम् ।
रामस्य दोस्सारममुष्य गायतां सुरीजनानां सुरभि समन्ततः ॥ 42

तादृक्षफालाक्षमहाधनुर्ध्वनेर्विदेहगाधेयरघूद्वहान्विना ।
लोकास्तदानीं भयसिन्धुवीचितां समूहमूहुर्मुमुहुर्मुहुर्मुहुः ॥ 43

[1]हाहा सहाहावचनं पुनःपुनः [2]प्रणीत(रागैः)सह मञ्जु सञ्जगौ ।
नाकाम्बुजाक्ष्यो ननृतुर्नभश्चराः सुमान्यमुञ्चन्नथ सारभूरुहाम् ॥ 44

निर्वर्त्य यज्ञं नृपवर्गपूजितो निमिक्षितीशोऽनिमिषस्तुतोदयम् ।
गाधेयमिक्ष्वाकुकुलोत्तमौ ततः पुरो निधायात्मपुरीं विवेश सः ॥ 45

आलोक्य तच्चित्र मगोचरं गिरां विदेहराजो विलिलेख हर्षवान् ।
भर्त्रे भुवः पंक्तिरथाय पत्रिकां मनूद्वहोद्वाहमहःप्रवर्तिकाम् ॥ 46

तां पत्रिकामेतदनुज्ञया रयात्ततो गृहीत्वा [3]जवनान्वनायुजान् ।
आरुह्य दूतास्तमजक्षमाभुजः कुमारमाकारयितुं विनिर्गताः ॥ 47

वेगादयोध्या[4]नगरीं गरीयसीं प्रविश्य ते रामविवाहपत्रिकाम् ।
दत्वा महेशानधनुर्भिदादिमां कथां नृपायाकथयन् सविस्तरम् ॥ 48

तोषादमीषामवकर्ण्य भाषितं पतिः क्षितेः पंक्तिरथः प्रथास्पदम् ।
ताम्बूलजाम्बूनदभूषणाम्बराण्यदत्त तत्तद्वचनैः स लालयन् ॥ 49

ताभ्यां समं केकयमागधात्मजातनूभवाभ्यां धरणीपतिस्ततः ।
युक्तो वसिष्ठप्रमुखैः सबान्धवो मृगेन्द्रगामी मिथिलापुरीमगात् ॥ 50

स्वामी निमीनां चतुरङ्गसङ्गतः सतोषमभ्युद्गत एष तं नृपम् ।
प्रावेशयद्भमंक्तोपकारिकां [5]प्रशस्तवस्तूपचयेन पूरिताम् ॥ 51

---

1. हाहास्सहाहावचनं 2. प्रणीतया...सह 3. जवनान्ववायुजान् 4. नगरी 5. प्रशस्त ।

अर्घ्यादिकृत्यैरभिपूज्य मैथिलः तमागतं पंक्तिरथं ततोऽब्रवीत् ।
भास्वत्कुलेन्दो भवदात्मजागमात् सवः प्रवृत्तः स ममोत्सवोऽभवत् ।। 52

रामाय सीतां भारताय माण्डवीं क्रमात् सुमित्रासुतयोर्महीपते ।
अत्रोर्मिलाञ्च श्रुतकीर्तिमप्यहं दिशामि भव्ये दिन इत्यवेदयत् ।। 53

अस्योक्तिमाकर्ण्य मुदर्णवं विशन् प्रतिग्रहो दातृवशः प्रकीर्तितः ।
इत्यालपन्निन्दुमतीतनूभवः सभासदामातनुते स्म सम्मदम् ।। 54

अस्योदितेन प्रमना निमिप्रभुस्ततो वसिष्ठानुमतो धृतोच्छ्रयः ।
सर्वं पुरं भूषयितुं विशेषतो मनोज्ञमाज्ञापयति स्म मन्त्रिणः ।। 55

आदेशमेतस्य विदेहभूपते [1]र्निधाय मौलौ निखिलाश्च मन्त्रिणः ।
आकल्पयामासुरशेषचक्षुषां प्रहर्षयित्रीं मिथिलां समन्ततः ।। 56

सर्वे भवामः सफला रघुप्रभोः समागमेनेति महामणीगृहाः ।
द्वारस्थरम्भाग्रसमुल्लस[2]त्फलच्छलादशंसन्नु जनाय पश्यते ।। 57

भिन्नेशधन्वेष जिगाय मां [3]धृतः पुरेत्यमुं सेवितुमीशधन्वना ।
([4]कूटा व्यराजन् प्रहिता इवाद्रिणा)[5]महीधरास्तत्र सुवर्णचित्रिताः ।।58

विस्तीर्णकौशेयवितानसंभृतप्रकीर्ण[6]मुक्तास्तबकोदितास्त्विषः ।
दिग्भित्तिकास्तत्र करग्रहोत्सवे वितेनिरे चन्दनचर्चिता इव ।। 59

दिव्येशचापं दितवानसाविति प्ररूढशङ्कं भजनार्थमागताः ।
दिव्येशचापा इव दीप्तमूर्तयो नवा व्यराजन्नवरत्नतोरणाः ।। 60

प्रांशुस्थलस्यन्दनकोटिपाटितात् घना[7]द्गलन्त्यश्चपलालता इव ।
इलामणीयन्त्रकृतभ्रमा नटीजना व्यराजन् पथि जातसम्भ्रमाः ।। 61

1. निधायि 2. त्पलच्छला दशं सन्नु 3. धृते 4. कूटव्य राजन् 5. महीरथा-
6. मुक्तस्तबको दिता स्त्विषः 7. द्गलन्त्यचपला ।

तत्कालकालागुरुधूमधोरणीं विसृत्वरीं व्योमनि वीक्ष्यनिर्जराः ।
रामस्य फलाक्षधनुर्भिदोदितं महःकृशानुं [1]स्थितमन्वधास्यन् ।। 62

नित्योज्ज्वलैस्सौधकृतध्वजान्तरे निधापितैर्निर्मलरत्नदर्पणैः ।
आकल्पिता सा नगरी नभोऽङ्गणं निरास्यतैकद्युमणिप्रसाधितम् ।। 63

रथ्यासु सद्यस्तुहिनाम्बुसेचनादतीव शैत्यं दधतीषु सर्वतः ।
सिताद्रिसीम्नः शिवयोः करग्रहे वसिष्ठमुख्या[2]वशिनः समस्मरन् ।। 64

वीथीषु कीर्णैः प्रसवैरितस्ततो मरन्दसंसक्तमधुव्रतान्वितैः ।
[3]अक्ष्णां सहस्रं दधतीव विद्युते सुताविवाहं वसुधा विलोकितुम् ।। 65

तत्रोत्सवे [4]पंक्तिरथादिभूभुजां पदार्पणाय [5]प्रततानि वीथिषु ।
धौतांशुकानीव विरेजिरेतरां सिताभ्रचित्रायितरङ्गवल्लिकाः ।। 66

विश्वे चरन्तो विशिखासु तत्पुरीललामलामज्जककायमानकम् ।
सौरभ्यलुभ्यन्मनसः सिषेविरे श्रयन्ति सेव्यं सुरभि स्वयं जनाः ।। 67

ढक्काहुडुक्कानकवेणुचर्चरीमृदङ्गनाकस्वरशृङ्गशङ्खतः ।
शब्दः प्रभूतोऽब्धितलं महीतलं रसातलं शब्दगुणं प्रणीतवान् ।। 68

प्राकाशतैवं मिथिला प्रसाधिता निलिम्पराजस्य पुरीं निजश्रिया ।
धिक्कुर्वती दिव्यमणीवितानभाक् सवैजयन्तीयसहस्रवैभवा ।। 69

भव्ये दिने भूषयितुं पुरन्ध्रयो वसिष्ठगाधेयविनिश्चिते ततः ।
आरेभिरे तामवनीतनूभवां विदेहदेशाधिपतेर्निदेशतः 70

नीता कयाचित्तपनीयपीठिकां विदिद्युतेऽध्यास्य विदेहनन्दना ।
गाङ्गेयपद्माधिगतेव सिन्धुजा गभीरवृत्तौ जनके प्रहृष्यति ।। 71

---

1. स्थितमन्वधास्यतु 2. वसिनः 3. अक्षां 4. पंक्तिरथाधिभूभुजां 5. प्रततानवीथिषु ।

फाले तदीये निहितान् [1]शुभाक्षतान् स्वनत्सु तूर्येषु सुवासिनीजनै ।
[2]लोकाः प्ररूढाक्षतरागकन्दलीर्धरासुताराघवयो[3]स्तदाऽब्रुवन् ।। 72

प्रायश्शिरोजाः प्रसवाधिवासिता मधुव्रतैः सख्यकृतो महीभुवः ।
न्यस्तस्य तैलस्य कयाऽपि मस्तके [4]स्वसौरभाच्चम्पकगन्धमाक्षिपन् ।। 73

अस्याः शिरोजभ्रमरा मरन्द इत्यवेत्य तैलं प्रमदा दनापिषु ।
रिङ्खन्मणीकङ्कणनिक्वणोचितं मृषैव तस्याः करकौशलादिति ।। 74

न्यक्कुर्वती हंसगतिं निजक्रमान्मणीमयं मज्जनधाम मैथिली ।
आविष्कृतालीजनहर्षकन्दला तटिल्लतेवाम्बुदगर्भमाविशत् ।। 75

जम्बीरमस्याः स्तनसाम्यदृप्तमित्यमुष्य सारं [5]किमणूदरीपरा ।
हृत्वा निधत्ते स्म तदीयकैशिके महद्भिरल्पस्य तुलां सहेत कः ।। 76

वल्गद्वलग्नं वलमानकङ्कणं नटत्कटाक्षं नतगात्रमेकिका ।
प्रस्विन्नफालं पृथिवीभुवः कचे न्यधत्त गन्धामालकं नितम्बिनी ।। 77

सितोत्तमाङ्गे [6]सुदृशान्ययार्पितं तदाश्रयाद्धन्यमतीव चन्दनम् ।
तस्याः करामर्दनजातफेनतः सुगन्धिवस्तून्यसहत्पराणि किम् ।। 78

तां पद्मिनी काचन मन्दगामिनी करस्फुरत्काञ्चनकुम्भसंभृतैः ।
अच्छोदकैरभ्यषिचन्महीसुतां यदब्जहस्ता रसराशिभूरसौ ।। 79

तन्व्याऽन्यया मृष्टतनूलताद्रंता सुता धरित्र्यास्त्रिजगज्जिगीषतः ।
रत्यर्पिता [7]मृष्टमधुद्रवा नवा सुमाशुगस्येषुरिवव्यराजत ।। 80

कौसुम्भमष्टापदवल्लिवेल्लितं दुकूलचेलं दधती धरासुता ।
बालार्कभानूज्ज्वलसांध्यरागभाक् तदा दिगैन्द्रीव विलोकनीयताम् ।। 81

---

1. शुभाक्षरान् 2. लोका 3. स्तथा 4. स्वसौरभो 5. किमणीदरी 6. सुदृशास्यया-
7. मृष्ठि ।

लोके प्रसूनानि [1]भजन्ति षट्पदाः स्वयं सुमान्यत्र भजन्ति षट्पदान् ।
आश्चर्यमित्यालिजने वदत्यदः कचालिमन्या[2]कलिताः स्रजोऽभजन् ।। 82

नीलाश्मनः स्वं प्रसभेन गृह्णतो निरस्यतोऽस्याश्चिकुरान्निषेवितुम् ।
प्रीत्येव दूर्वासमुपागतान्यया विलासवत्या निहिता विदिद्युते ।। 83

आलीजनास्थं [3]प्रतिपश्यताद्भुतं तनोमि तेजस्तमसोस्सहासिकाम् ।
एवं ब्रुवाणा रविचन्द्रभूषणे परा न्यधात्कैश्यपदे धराभुवः ।। 84

सीता तदा ते कचसीम्नि बिभ्रती सरोजिनीबन्धुशशाङ्कभूषणे ।
एकां दधाने मिहिकांशुरेखिकां सरस्वतीशैलसुते व्यडम्बयत् ।। 85

सीमन्तसिन्दूरमयूखसंध्यया विदिद्युते व्योम्नि तदीयकैशिके ।
लक्ष्म्या तदग्रे नवतारकावली ललास मुक्ताग्रथिता ललन्तिका ।। 86

आलोक्य नीलानलकानिलाभुवः सयूथ्यबुद्ध्या मुखसारसा[4]दलिः ।
उद्यन्निवारादुरकल्पिताऽन्यया मृगीदृशाऽभान्मृगनाभिरेखिका ।। 87

काश्मीरपत्रालिरधः कपोलयोः कृता बभूवाचिररोचिरन्यया ।
कामप्रतापातपभूमशंसिनी तथापि चित्रं चिररोचिरद्युतत् ।। 88

वैचित्र्यमस्या वदनाम्बुजन्मनो ब्रवीमि किं वा बहिरुद्गतैरिदम् ।
मुक्ताफलैरन्वितमन्ययार्ऽपितं स्वपार्श्वयोराधित कर्णिकाद्वयम् ।। 89

आलोकनीयस्सकलैरनञ्जनैस्तनुत्विषा द्वेष्टि च राघवोऽञ्जनम् ।
[4]अन्या न्यधादेतदथापि तद्दृशोर्न किं प्रतीता[6]वनिता नु मुग्धताम् ।। 90

नम्रेण रम्यामवलोक्य नासिकां तिलप्रसूनेन समर्पितं निजम् ।
दीव्यन्तमारादिव कीर्तिकोरकं निमीन्द्रकन्याधितनासिकामणिम् ।। 91

---

1. कचालि 2. कलितास्रभो 3. प्रति वश्यताद्भुतं 4. दलेः 5. अन्योन्यथादेतदथापि-
6. दनिता ।

कस्तूरिकां प्राप्य कयाचिदर्पितां स्तनौ तदीयौ तरुणाम्बुदावृतौ ।
[1]अद्रीन्द्रशृङ्गे इव रत्नमालिकामवाप्नुतां तौ सुषमाकरौ न किम् ॥ 92

अस्याः करः पूरुषरत्नमादिमं परिग्रहीतेति जनाय शंसितुम् ।
भूमीभुवःपूरुषरत्नकङ्कणं करे न्यधात्काचन वामलोचना ॥ 93

एणीदृशा सुस्थिरमेकयार्ऽपितामवाप्य रत्नाकरमेखलां तदा ।
वैदेहपुत्री [2]वसुमत्यबीभवत्कथं सुता नानुकरोति मातरम् ॥ 94

भानुः स्वभर्ता नलिनं तु तत्सुहृत्पदं तदेवेति विचिन्त्य तच्छ्रितम् ।
चक्रं ग्रहाणामिव क्लुप्तमन्यया रराज तस्या बहुरत्ननूपुरम् ॥ 95

लाक्षा वयस्या रचिता वसुन्धराभुवःपदे भूषयितुं[3]समेयुषी ।
प्रागेव तत्कान्तिभरात्तिरोहिताऽप्यहो तदाधादतिरोहितद्युतिम् ॥ 96

अङ्गानुषङ्गा[4]दवनीतनूभुवः समेत्य सद्यस्सुषमामनुत्तमाम् ।
रत्नानि रत्नान्यभवन् सुवर्णमप्यभूत्सुवर्णं सफले जनेक्षणे ॥ 97

आलोकयन्नेवममूं परिष्कृतां दधे विदेहः प्रमदं प्रतिक्षणम् ।
आसीज्जयेषुर्मम शाणतेजितेत्यधाद्विदेहोऽप्यपरः कुतूहलम् ॥ 98

सन्तोषयन्त्या सवयोदृगुत्पलान्यनन्तभूषाभ्युदितश्रियाऽनया ।
ताराधिभूरेखत एव तत्क्षणं विदेहपुत्र्या वसतिर्व्यराजत ॥ 99

[5]परार्घ्यमौक्तिकेन्द्रनीलपद्मरागनिर्मितात्
परिष्क्रियाशतादसौ प्रसाधिता महीसुता ।
प्रसूनकोरकालिनी प्रवालजालशालिनी
प्रकाशते स्म माधवी यथा तथा मधूदये ॥ 100

---

1. आदीव्रदीव्रादिव 2. वसुमत्यदेदिचित् 3. समेयुषि 4. अवनीतनूभवः 5. परार्घ्यं ।

तदनु जनकपुत्रीं भूषिताशेषगात्री-
मनघकनकपुत्रीमग्रतः सञ्चरन्तीम् ।
प्रसवशरविधातृप्राणितामेक्ष्य रम्या-
[1]मधरत परितोषं सौमनस्याद्वयस्याः ॥ 101

स्वाद्वीदुग्धसितासुधामधुरवाण्यश्रान्तसन्तोषित-
प्रौढश्रीरघुनाथदत्तशुभवत्सार्थाभिधा[2]युवतया ।
देव्योद्यन्मतिसख्यया मधुरवाण्यम्बाख्यया निर्मिते
श्रीरामायणसारकाव्यतिलके सर्गोऽभवत्सप्तमः ।। 102

इति श्रीरामायणसारकाव्यतिलके

सप्तमः सर्गः



1. अधिषत 2. संभृता ।

# श्रीरामायणसारकाव्यतिलके

## अष्टमः सर्गः

रामः श्रीमान् रम्यमूर्ती रघूणां पारम्पर्याचार्यवर्यस्य सूक्त्या ।
पाणिग्राहोपक्रमार्हं प्रहृष्टः स्नानं कर्तुं सद्य एवोदयुंक्त ॥ 1

आशाव्यापिन्यानकानां निनादे हैमे धाम्नि क्ष्मासुराग्रेसरेषु ।
आशीर्वादानालपत्सु प्रसन्नो रत्नस्यूतं पीठमध्यास्त रामः ॥ 2

आसीनं तं पद्मरागानुविद्धे पीठे दृष्टिप्रीतिहेतौ मुनीन्द्राः ।
सर्वे दृष्ट्वा संस्मरन्ति स्म साक्षात् पूष्णो बिम्बे तस्थिवांसं पुमांसम् ॥ 3

वल्गन्मुक्तादाम रिङ्खद्वलग्नं लीलालोलालोकनं स्विन्नफालम् ।
तैलं मूर्ध्नि न्यस्य तस्य प्रगल्भा नारी काचिन्नर्तयामास हस्तौ ॥ 4

तादृक्तैलं चम्पकामोदधन्यं भूयो नानाचम्पकाभ्युद्गतेन ।
सारङ्गाक्षी सौरभेणानपेतैः श्वासाङ्कूरैर्वासयामास सैषा ॥ 5

रामोऽन्यस्या हस्तमालम्ब्य पश्चात्तन्वानोऽसौ तैलधारामिवाब्दः ।
शम्पान्वीतः कन्दरं रत्नसानोर्मन्दं मन्दं मज्जनागारमागात् ॥ 6

आकीर्यैत[1]न्मूर्ध्नि पाटीरसारं तन्वानायास्तैलमार्ष्टि परस्याः ।
पाथोजाक्ष्याः पाणिशिल्पं शशंसुः प्रायो रिङ्खत्कङ्कणानि प्रणादैः ॥ 7

तन्व्या क्लुप्ताद्भर्मकुम्भोद्धृताम्भोधारासेकादेकयासौ ननन्द ।
एतत्सायंप्रातरम्भोधिवीची तोयासेकात्तुष्यतस्तस्य युक्तम् ॥ 8

---

[1]· मूर्धि ।

रामस्याङ्गेष्वार्द्रभावं नुदन्ती धौतेनान्या वाससा तस्य शक्ता ।
क्षेप्तुं नाभूदन्तरङ्गार्द्रतां यद्बाह्यादङ्गादन्तरङ्गं बलीयः ।। 9

रामः स्नात्वा मज्जनागारभागा[1]दायातोऽसावम्बुजाताकरस्य
मध्यादुद्यन्मत्तहस्तीव सद्यः शृङ्गाराहं श्रीविशेषं विवव्रे[2] ।। 10

सौरभ्यार्थं कल्प्यमानाः कयाचित् सीमन्तिन्या राघवेन्दोः शिरोजान् ।
पाथोवाहान् प्राप्नुवन् धूपधूमाः प्रायो मेघानाश्रयन्ते हि धूमाः ।। 11

मौलौ नद्धं मानवत्या कयाचिन्मल्लीदाम स्वर्धुनीमाननीयम् ।
बिभ्राणं तं चित्तजाक्षेपजाग्रत्तेजश्शालीदेव[3]एवेत्यशंसन् ।। 12

काकुत्स्थेनाकल्पिता नासिकादौ [4]सा कस्तूरीकल्पिता वक्त्रलक्ष्म्या ।
विस्तीर्णत्वस्पर्धिनोर्निर्मिताऽक्ष्णोर्मर्यादायै मेचका रेखिकाऽभूत् ।। 13

संचिन्त्यास्यागामिसेतोर्विधानात् शैलेन्द्राणां साध्वसं रोहणेन ।
प्रीत्यर्थं प्राक्प्रेषितैर्वा चिरत्नै रत्नैर्जुष्टं राघवोऽधात् किरीटम् ।। 14

नीते स्फीते नीरजाक्ष्या कयाचिन्मूल्यातीते धारयामास धौते ।
काकुत्स्थानामग्रणीः कर्णयुग्मे कीर्त्यङ्कूरस्मारके मौक्तिके द्वे ।। 15

प्राप्ते स्निग्धे प्रत्यहोन्मेषवाञ्छां वक्तुं वक्त्रं मुद्रयित्वा विनीत्या ।
शश्वद्धाम्नो रामचन्द्रस्य कर्णौ मुक्ताभूषाच्छद्मना कैरवे किम् ।। 16

कण्ठे लिम्पन्नेणनाभिं दधानः सर्वाङ्गेषु स्फारकाश्मीरसारम् ।
साक्षाद्विष्णुः शम्भुधात्रात्मकत्वं व्यक्तीचक्रे वारिजातायताक्षः ।। 17

साक्षाद्रामः सारसाक्षो हृदस्य प्रेयो जन्मस्थानमित्येक्षितुं तत् ।
हारव्याजादागतैवोडुपंक्तिः शंसत्येनं येन नक्षत्रमालाम् ।। 18

1. आयातोऽस...बुजाताकरस्य 2. विवेव्रे 3. एवैत्यशंसन् 4. तत्कस्तूरीकल्पितं ।

अस्मान् देव त्वद्भुजा मात्रमंस्था[1]स्तत्रद्वाहाभ्यां धारयित्वा वसामः ।
इत्थं हस्तग्राहिभि[2]स्ताक्ष्यरत्नैः क्लृप्ते रामः कङ्कणे द्वे दधार ॥ 19

कीर्तिस्फूर्तौ धाम्नि चामुष्य तुल्ये धात्र्यां नास्तीत्येतदावेदनाय ।
प्रोतं मुक्तापद्मरागै[3]र्जयाङ्कं [4]मञ्जीरं किं न्यास्यदन्या तदङ्घ्रौ ॥ 20

रामस्सोयं रत्नकोटीरधारी भर्मक्षौमभ्राजितो दिव्यरत्नैः ।
कूटं दीव्यद्बिभ्रतो हाटकाद्रेर्नानामर्त्यान् नन्दयन्नन्वकार्षीत् ॥ 21

[5]आदायोर्वीनन्दनाङ्गाद्दृणं तद्वर्णं दीव्यत्क्षौमवस्त्रानुवर्ति ।
स्वर्णं वर्णं न क्षमं किं विनेतुं लब्ध्वा वेलां रञ्जयामास रामम् ॥ 22

आत्मालोकात्कल्पयन्नञ्जमैत्रीं प्राप्तो धात्रीं भानुरेवैष रामः ।
नो चेद्भूषानूत्नरत्नश्रिया किं स्वैरं भेजुस्तं सहस्रं मयूखाः ॥ 23

एतस्याथो राघवस्यानुजाताः स्नातालिप्ताः स्रग्विणो भूषिताङ्गाः ।
क्षौमं हैमं बिभ्रतो नर्म भेजुस्तेजस्त्रय्याः कैकयीनन्दनाद्याः ॥ 24

निस्साणानां निःस्वनो व्याप विश्वं शब्दैस्साकं शङ्खशृ(ङ्गादिजन्यैः)
काकुत्स्थेन्द्रोद्वाहकल्याणवार्तामुक्त्वा सर्वं लोकमाकारयन् किम् ॥ 25

आरूढेन स्वामिनाथो रघूणां भद्रेभेन्द्रं सारपाटीरगौरम् ।
वारं वारं वासवश्रीर्विवव्रे तद्द्रष्टारश्चाभवन्निर्निमेषाः ॥ 26

इक्ष्वाकेन्दोर्धाम(सत्पद्म)भानो[6]र्भूरीन्(दीर्घान्)भानुदण्डान् प्रचण्डान् ।
अग्रे किं वा स्थापयन्तो गृहीत्वा दीप्ताः केचित् [7]दीपयष्टीरथापुः ॥ 27

रामस्याग्रे दीप्तलीलाग्नियन्त्रज्वालाजालध्वानतो जातवेदाः ।
तत्कल्याणं वृत्रभेत्त्रे समीपावासस्नेहाद्वक्तुमेवास्पृशद्द्याम् ॥ 28

---

1. त्वद्वाहाभ्यां 2. ताक्ष्यरत्नैः 3. जियाङ्कं 4. मञ्जारं 5. आदायोर्वी 6. भूरीन्-भानुदण्डान् 7. दीपयष्टीरधाप ।

दन्तिस्कन्धारोहिणो दिव्यमूर्त्तेरैक्ष्वाकेन्दोरग्रभागे पदाभ्याम् ।
धात्रीनाथास्ते चरन्तोऽपि दन्तिस्कन्धारोहानन्दमेवान्वभूवन् ॥ 29

चन्द्रः किं वा किन्वसौ चण्डधामा शक्रः किं वा किन्वसौ पद्मजन्मा ।
शर्वः किं वा किन्वसौ शाङ्‌र्गधन्वेत्येतं दृष्ट्वा तर्कयन्ति स्म पौराः ॥30

अन्ये पंक्तिस्यन्दनस्यात्मजाता भद्रेभेन्द्रारोहिणो भव्यरूपाः ।
राजीवाक्षं चक्रभोगीन्द्रशङ्खा रज्यन्तः किं राममेवान्वयुस्ते ॥ 31

सोऽयं रामः [1]सोदरान्वीतपार्श्वो विश्वोदञ्चद्बेत्रिहोंकारपूर्वम् ।
भद्रेभेन्द्रस्कन्धभागावरूढः पादन्यासैः पावयामास [2]धात्रीम् ॥ 32

वस्तुव्रातैर्निस्तुलैर्मङ्गलार्हैः श्लाघ्याभिख्यां जातरूपश्रिया च ।
वैदेहेन्दोर्वैभवं व्यञ्जयन्तीं काकुत्स्थेन्द्रः प्राप कल्याणवेदिम् ॥ 33

निन्ये लीलायानधन्यामवन्याः कन्यां साध्वीसंसदुद्वाहवेदिम् ।
व्यङ्क्त्रीं सान्द्रामोदकान्तालिगीतं हंसीं वेला पद्मिनीं शारदीव ॥ 34

एतत्पाण्योर्ब्रह्मसङ्घानुमत्या किं वा दृष्ट्वा कौतुकं नह्यमानम् ।
एकोऽनैषीदात्मभूरेतदीयं गाढं दत्तः कौतुकं किं वदामः ॥ 35

मध्येकृत्य क्षौमनेपथ्यमेतौ तत्राभातां मैथिलीरामभद्रौ ।
क्षीराम्भोधौ विद्रुमाख्यानवल्ली पाथोधौ वा वीचिपार्श्वद्वयस्थौ ॥ 36

राजा कन्यां राघवायाददात्तं विष्णुं लक्ष्मीं तां नृपं मेनिरेऽब्धिम् ।
शौरिः किं नो सोऽब्जहस्ता न किं वा सैषा सोऽयं सद्गुणाब्धिर्न किं वा ।37

रामः श्रीमानेष माङ्गल्यसूत्रं धात्रीपुत्र्याः स्थापयामास कण्ठे ।
पौलोमी तन्निर्जरीकण्ठसूत्रस्थित्या मेने हेतुमत्रावतीर्णा ॥ 38

---

1. सोदरान् वीतपार्श्वो 2. धात्री ।

अन्योन्येन न्यस्तमन्योन्यशीर्षे मुक्ताजातं धौतमेतौ दधाते ।
मूर्ध्ना नाङ्गीकुर्वते नु(क्व)लोके स्वच्छं वस्तुप्राप्तसद्वृत्तभावम् ।। 39

नेपथ्येऽस्मिन सम्भ्रमेणापनीते क्षीरासेकैः पालिकाङ्कूरतः प्राक् ।
[1]सीतारामौ रोमहर्षांकुरौघान् [2]पुष्णीतः स्मान्योन्यवीक्षारसेन ।। 40

सीतारामान्योन्यचेलाग्रबन्धं दृष्ट्वा क्लुप्तं शास्त्ररीत्या तदात्वे ।
एतच्चेतःस्थायिमैत्रीगुणानू[3]बन्धं धीरा भावयन्ति स्म गाढम् ।। 41

सीतां शम्पां रामभद्रं पयोदं प्रावृड्बुध्दया तत्कराग्रप्रमुक्तान् ।
लाजान् [4]किं वा प्रेक्ष्य वर्षोपलौघान् [5]नृत्तं चक्रे तत्र बर्ही रयेण ।। 42

पादे स्पृष्ट्वा चारयन् भूमिकन्यां स्तुत्यः······सप्तरा······।
···स्याधिक्यं तेषु किं नवतन्वन् पूर्वाचार्या इत्यमुं स्तौति हार्दात् ।। 43

काकुत्स्थेन्द्राकल्पितं भूमिकन्यापादाब्जाश्मारोपणं तत्प्रपेदे ।
भाविप्रायस्सेविसामन्तकान्ताचूडारत्नारोपणव्यञ्जकत्वम् ।। 44

कालत्रय्यां पूज्य एवायमित्थं व्यक्तीकर्तुं तत्र वैदेहपुत्र्यै ।
पाण्यम्भोजं पाणिनालम्ब्य तस्याः पर्यैद्रामः पावकं त्रिः प्रदीप्तम् ।। 45

अनन्देनारुन्धतीशक्तितातौ कार्यं सर्वं कल्पयित्वा पुरस्तात् ।
आलोक्यैतौ जाग्रतौ तद्विलोकश्रयेःसाक्षादन्वभूतामयत्नम् ।। 46

सीतान्वीतं ते मनुश्रेष्ठमेतं भूमीदेवा भूरिशो मन्त्रपूतैः ।
आशीर्वादैरादरादन्वगृह्णन् वेदाधीतेर्जातजाड्या यदेते ।। 47

मन्तुं क्षेप्तुं तद्गुणौपम्यलब्धं साध्वीक्लुप्तोऽरात्रिकापात्रभाजः ।
मुक्ताः कृत्वा दृष्टिदोषापनुत्तिं चित्रं तत्रानन्दयन्नेतदीयम् ।। 48

---

1. सीतारामो 2. वृष्णि तस्मान्यवीक्षारसेन 3. बन्धं धीराभावया...पादम्
4. किंवाग्रेक्ष्य 5. वृत्तं ।

वैदेहेन्द्रः सानुजातोऽथ गौरीं शैलाध्यक्षः [1]शङ्करायेव हृष्यन् ।
उद्यल्लीलामूर्मिलामूर्मिलाभालाभाद्धन्यां लक्ष्मणाय व्यतारीत् ।। 49

अन्तर्नन्दन्नग्रगामी निमीनां मीनापाङ्गां कैकयीनन्दनाय ।
माधुर्याढ्यां माण्डवीं मन्दयानां स्कन्दायेन्द्रो देवसेनामिवादात् ।। 50

तन्वीचूडाभूषणं तत्स्वसारं सारङ्गाक्षीं सोऽदिशन्मैथिलेन्द्रः ।
शत्रुघ्नाय स्वामिने यामवत्या रुच्यां दक्षो रूपतो रोहिणीं वा ।। 51

पार्श्वे पत्नीः प्राप्य सन्तुष्टचित्ताश्चत्वारस्ते शश्वदिक्ष्वाकुवीराः ।
सत्वान्वीता व्यद्युतन् शौर्यलक्ष्मीधन्याः शौरेर्बाहुदण्डा इवैते ।। 52

नादो जज्ञे व्योम्नि [2]नाकानकानां देवाः सर्वे दिव्यपुष्पाण्यवर्षन् ।
गायन्ति स्म स्वादु गन्धर्वपूर्वाः स्वर्वास्तव्याश्चानटन् वारयोषाः ।। 53

लोकश्लाघ्यान्योन्यसम्बन्धलाभादेतौ [3]पंक्तिस्यन्दनो मैथिलश्च ।
धन्यंमन्यौ धर्मबोधाविवोभावाभातां श्रीशालिनौ [4]हर्षवन्तौ ।। 54

धाटींघोटी[5]दन्तिसौवर्णपीठीशाटीपेटीरत्नपाटीर[6]कोटीः ।
दत्वा तेभ्यः [7]शाश्वतश्रीयुतेभ्यो मेने राजा मैथिलः स्वं कृतार्थम् । 55

कौसल्येशं गाढमाश्लिष्य दोर्भ्या-
माशीर्वादैस्तत्सुतान् वर्धयित्वा ।
(ताः) पुत्रीश्चानन्दबाष्पैर्निमी (शो)
(सर्वांस्तांस्तान् प्रेष) थामास [8]देशान् ।। 56

राज्ञा सैष प्रेषितो राममुख्यैः पुत्रैर्युक्तः पूषवंशावतंसैः ।
क्लुप्तोद्वाहैः कीर्तिधन्योऽजसूनुः प्रह्लन्नात्मा स्वां पुरीं स प्रतस्थे ।। 57

1. शङ्करा एव 2. नाकानतानां 3. पंक्तिस्यन्दनौ 4. हर्षमाणौ 5. दलति 6. कोटिः—
7. शाश्वतः श्रीयुतेभ्यः 8. देश्यान् ।

सैन्यैर्युक्तः [1]सैष (बन्धूत्करैश्च) गत्वा पंक्तिस्यन्दनोक्त्या [2]निवृत्य ।
सीतारामौ चिन्तयन्नन्तरङ्गे वैदेहेन्द्रः स्वां पुरीमाजगाहे ।। 58

रेणुच्छन्नादित्यरथ्या च रथ्या [3]प्रत्यर्थ्योजोनास्तिकं ह्यस्तिकञ्च ।
[4]अश्वीयञ्चामेयमैक्ष्वाकवृद्धं [5]पादातञ्चाप्यन्वयुस्तं प्रशस्तम् ।। 59

इत्थं पंक्तिस्यन्दने याति सद्यो मध्येमार्गं मानसत्रासहेतुः ।
[6]गन्धग्राह्यं भूरुहाणाञ्च षण्डं खण्डं खण्डं चण्डवातो जिहिण्डे ।। 60

स्वर्भानुर्वा [7]वारिवाहावलिर्वा नूत्नं ध्वान्तं [8]वेति भीते पतङ्गे ।
वात्यावृत्त्यावर्तिता धूलिपाली रोधोरन्ध्रं निर्निरोधं रुरोध ।। 61

क्रन्दन्ति [9]स्मोत्प्लुत्य कङ्का विशङ्का [10]घूकाः काकाश्चुक्रुशुर्घूर्णमानाः ।
वारंवारं भैरवं [11]भैरवाश्च व्यूहाश्चक्रु[12]र्घोषमीहामृगाणाम् ।। 62

भूयो भूयो भूतधात्र्या[13]मपप्तन्निर्घातौघास्तारकाभिस्समन्तात् ।
[14]बाहाभाजामद्भुतं [15]भार्गवर्षेस्तेजःकीर्त्योस्स्रंसनं शंसति स्म ।। 63

धूता जाता धोरणी धोरणीनामाधाच्चिन्तां पंक्तिराधोरणानाम् ।
आर्तिं प्रापन् भूयसीमश्ववारास्तान्तास्सर्वे तत्रसुस्तत्र शूराः ।। 64

तत्तच्चित्तत्रासकृद्दुर्निमित्तं
सर्वं नानासैनिकानां च दैन्यम् ।
[16]ईक्षित्वाऽसाविन्दुमत्यात्मजातः
शङ्कायुक्तः [17]शर्म नाधाच्च किञ्चित् ।। 65

---

1. सैषव...... 2. निवृत्यन् 3. प्रत्यधोजो 4. अश्वियंचो 5. पादातमं, 6. गन्धग्राह्णां 7. वारिवाहावलीर्वा 8. वेदिभीते 9. स्मोत्प्लत्य 10. घूकाकाराः 11. भेरवाश्च 12. घोषमीपागृहाणाम् 13. मपस्तन् 14. बाहाभाजोरद्भुतं 15. भार्गवर्षेतेजः 16. ईक्षित्वासविन्दु 17. शर्मनादाश्च ।

ऐक्ष्वाकं तं वीक्ष्य तादृक्षचिन्तासन्तापार्तं सौरवंशोपदेष्टा ।
सिञ्चन्मौनिः स्वादुभिर्वाक्सुधाभिः स व्याजह्रे भाविसर्वार्थबोद्धा ॥ 66

एनां[1] भूमीनाथ मुञ्चस्व चिन्तां प्रादक्षिण्यात्कृष्णसाराश्चरन्ति ।
एतच्छ्रेयोहेतुरेवेत्यभाणीत् मौनिश्रेष्ठो धीगरिष्ठो वसिष्ठः ॥ 67

मिथ्यालापं वक्ति नासौ वसिष्ठ[2]स्तत्त्वालापा वागमुष्येत्यवेत्य ।
आशश्वास [3]स्वान्तरे जातधैर्यः कैकेयीशो गर्जितेनैव [4]शौरेः ॥ 68

जाग्रत्तेजा जाटजूटं दधानो भीमोऽप्यञ्चत् दोष्ण्यखण्डं कुठारम् ।
धृत्वा दृष्टचोः फालवह्निं तदात्वे रामश्चित्रं नर्तयन्नाजगाम ॥ 69

संख्यातीतक्रूरकोटिः पविः किं [5]सोऽयं प्रातश्चण्डधामा रविः किम् ।
साहस्रार्चिर्जातवेदाः किमित्थं तं दृष्ट्वाऽग्रे तर्कयन्ति स्म योधाः ॥ 70

तस्योद्दाम्ना देहधाम्नाऽभिभूता योधाः केचिन्मीलयन्ति स्म नेत्रे ।
दूरादन्ये दुद्रुवुः केचनाराच्चेष्टां हित्वा चित्रक्लुप्ता इवासन् ॥ 71

उद्यच्चापज्यामदं जामदग्न्यं तत्रालोक्यारुन्धतीजानिमुख्याः ।
सर्वे दान्ताः सम्यगर्घ्यादिकृत्यैः पूजायोग्यं पूजयामासुरेनम् ॥ 72

जन्ये जिष्णोः साह्यकर्त्री धरित्रीभर्त्ता दत्तां भार्गवोऽर्घ्यादिपूजाम् ।
रोषावेशा रूषितात्मा न पश्यन् रामाभ्यर्णं तूर्णमेवाभ्ययासीत् ॥ 73

तत्रायातः क्षत्र गोत्रस्य भेत्रा भूयो भूयो भ्रूकुटिं निर्मिमाणः ।
[6]कण्ठा दुग्रं कालकूटं[7] वमश्च वैरामर्षव्यञ्जिकां वाचमूचे ॥ 74

एषां पङ्क्तिस्यन्दनीनां चतुर्णां मध्ये रामः कोन्वसौ मामकाख्याम् ।
अत्राहार्षीदस्य शिक्षां विधास्ये दस्युर्लोके दण्डनीयो न किं वा ॥ 75

---

[1]भूमिनाद. [2]तत्वालापो. [3]स्वातये. [4]कीर्ति [5]सायं [6]कण्ठादुग्रः [7]वम.

तिष्ठत्वेषा [1]धृष्टता विष्टपानां शिक्षाकर्तुः फालदृष्टेर्गुरोर्मे ।
चिच्छेदायं मामनादृत्य चापं हन्ताहन्तामस्य हन्ता ऽस्म्यहं ताम् ।। 76

बालस्यास्याशिक्षितास्त्रस्य किं वा प्राप्तो नासौ कर्णपद्यां मदीयः ।
आर्व्यामर्दक्ष्माकठोर. कठोरच्छेदक्रीडाकर्मठारः कुठारः ।। 77

कर्षं कर्षं कार्मुकं कालकण्ठो जन्येषु प्रागेव निन्ये मृदुत्वम् ।
भूपेष्वेतद्भेदनेनाद्य शौर्यं स्वस्मिन्नारोप्यैष दृप्यन् किमास्ते ।। 78

धात्रीशानां दर्पहाप्यस्य सद्यो दोर्धूतानां धूर्जटेश्चापभेत्तुः ।
तेषां तोषायैनमाक्षिप्य वत्सं तत्संस्तुत्यां प्राप्नुयां कीर्तिलक्ष्मीम् ।। 79

एतं लोकासह्यसारानपेतं बाहाकाण्डालम्बमिक्ष्वाकुडिम्बम् ।
दूरीकर्तुं गन्धदन्तीव वेगा[2]दायातोऽहं हन्तृकीर्तेः कियन्मे ।। 80

बद्धस्पर्धो बाहुलेयेन सार्धं क्रौञ्चं भित्त्वा कङ्कपत्रैरकार्षम् ।
चक्राङ्गानां वर्त्म तत्सैष चित्ते नो जानीते नूतनो राजपोतः ।। 81

निर्भिन्नाऽभूद्राजमार्तण्डतेजस्फूर्तिर्वारान् पूर्वमासन्नविंशान् ।
जन्याग्रे मत्प्रौढकौठार[3]कोटचा [4]कर्णाटव्यां नातनोत् किं तदस्य ।। 82

[5]कृत्तक्षत्रोद्वेलकीलालपूरैः कृत्वा संख्ये पञ्चसंख्यान् ह्रदान् प्राक् ।
तृप्तिं हर्षात् तरकार्षं पितॄणां वेत्त्येतत् किं वीरमानी न वाऽसौ ।। 83

बाहुस्तम्भानीशितुर्हैहयानां भंक्त्वा हन्तास्नेहभाजा मयोच्चैः ।
तेजोदीपे दीप्यमानेऽपि भूमावान्ध्यं नासौ मुञ्चते चित्रमेतत् ।। 84

रामः श्रुत्वा रेणुकानन्दनेन प्रायेणोक्तान् विप्रलापान् विहस्य ।
तस्योक्तीनामुत्तरं शौर्यगर्भं धीरोदात्तो वाचमाचष्ट धीमान् ।। 85

---

1. दृष्टता 2. आयातोयंहन्त कीर्तेत् कियन्मे 3. कोटच 4. कर्णाटट्यां 5. कृत्तक्षत्तोद्वेल ।

भूयोभूयः पीडयन्तं मदान्ध्यादन्यान् वन्याभ्यन्तरे सञ्चरन्तम् ।
गर्जन्तं च त्वादृशं वीरनागं नो मन्यन्ते नूनमिक्ष्वाकुसिंहाः ।। 86

क्रौञ्चाद्यद्रीन् वप्रलीलासु भिन्दन् निर्धूयाब्दानेष शत्रुञ्जयो मे ।
दन्ती कर्णोदीतवातैरशङ्कं चक्राङ्गानां स्वैरचारं विधत्ते ।। 87

[1]उद्दाम्नोर्यत्कीर्तिधाम्नोः प्रभावादस्मद्वंश्या भूभुजो यत्नवर्जम् ।
पर्यस्यन्ते राजमार्तण्ड[2]धाम ब्रूमः किन्नु त्वद्भुजाशौर्यचर्याम् ।। 88

अम्भःपूरैर्निर्मलैरभ्रसिन्धोस्तृप्तिं चक्रे [3]मत्कुलीनः पितॄणाम् ।
राजाऽकार्षीस्त्वं तु रक्तैरपूतैरेषा चर्या श्रोत्रयोरार्तिदात्री ।। 89

अस्मद्योधा हैहयाङ्गान्ध्रमुख्य[4]क्ष्मानाथानां दोस्सहस्राण्यनीके ।
छित्वा भूमौ स्वं प्रतापं विवृण्वन्त्यद्यापि त्वत्कृत्यमत्यद्भुतं किम् ।। 90

एको वृद्धो भूसुरः पारिकांक्षी रोषाविष्टो नैव जानासि किञ्चित् ।
[5]तादृक्षे(ऽहं) त्वय्यमर्षं कथं वा कुर्वे त्वद्वाक्संभ्रमं किं भणामि ।। 91

रोषाद्भीतिर्नैव वेषान्न [6]चापा[7]च्छापाद्धाम्नो नाक्षदाम्नो न बाणात् ।
मौञ्जीत्राणादेतदालोच्य सर्वं तूष्णीं ब्रह्मन्नास्महे विस्मयेन ।। 92

एवं वादिन्यग्रगण्ये रघूणां तोत्राविद्धः क्रुद्धचेताः करीव ।
धाम्ना धन्यं वैष्णवं धन्व दृष्ट्वा जातामर्षो जामदग्न्यो जगाद ।। 93

गर्वं धत्से किं वृथा मन्मथारेश्छित्वेष्वासं जीर्णमास्तां तदद्य ।
शौरेरेतं चापमारोपयेश्चेत् मन्ये राम त्वां ततः शक्तिमन्तम् ।। 94

इत्यालप्य क्षिप्तमिन्धानमंसे जन्योद्दण्डं वैष्णवं चापकाण्डम् ।
रामायास्मै राजकोद्वेजकौजो व्यावल्गद्दोरर्गलो भार्गवोऽदात् ।। 95

1. उद्दाम्नोद्यत्कीर्ति 2. दाम 3. मत्कुलीनाः 4. क्ष्मानादानां 5. तदृक्षे 6. चोपा 7. च्छापाद्दाम्नो ।

पाथोवाहः प्रावृड्‌युन्निवोच्चैस्तेजोरूपं तं हरेश्चापदण्डम् ।
व्यक्तीकर्तुं शौर्यधारामगृह्णादह्नायाह्नामीशितु[1]र्वंशनेता ॥ 96

आक्रोशन्तं रामभद्रोऽग्रहीत्तं दैत्यारातेर्नो वरं चापदण्डम् ।
प्रह्वीचक्रे प्राप्तपौरुष्यवाचो बाह्वागर्वाद्भार्गवस्यापि शीर्षम् ॥ 97

पूर्वाभ्यासादादिमः पूरुषोऽसावीदृग्धन्वारोपयामास शीघ्रम् ।
नो चेदस्यारोपणे कः पटीयानित्याचख्युर्मौनिमुख्यास्तदानीम् ॥ 98

प्रत्याख्यातुं भार्गवोदग्रभावं निर्घातस्याभ्युद्गतस्यानुकारम् ।
व्याकुर्वाणं बाणमाजिप्रवीणं चापे रामस्सन्दधाति स्म तस्मिन् ॥ 99

[2]चापे बाणं साधु सन्धाय कोपात् भास्वद्वंश्यो भार्गवं तं बभाषे ।
मत्वा योद्धुं मामशक्तं [3]वृथा त्वं धीरात्मेवोद्दण्ड[4]भावादवादीः ॥ 100

इत्थं शूरैरीर्यते वा स्वशौर्यं तस्मान्न त्वं पूजनीयस्तथापि ।
विश्वामित्रप्रीतिहेतोरिदानीं भूदेवत्वाच्चासि मे पूजनीयः ॥ 101

एतद्धन्वामोघमस्त्रं च तादृग्रूपं [5]तस्माद्रोधनं ते रवेर्वा ।
नोचेद्रोधं स्वर्गमार्गस्य कुर्यामेकं ब्रह्मन्नेतयोरीरयेथाः ॥ 102

इत्याख्यान्तं वीक्ष्य कल्पान्तवेलादुर्वारं तं धूर्जटिं स्मारयन्तम् ।
प्रह्वो भूत्वा राजघः पारिकांक्षी भद्राकांक्षी रामभद्रं बभाषे ॥ 103

स्वाराट्पूर्वैर्दर्पकारेश्च शौरेः सारासारौ साधु विज्ञातुकामैः ।
सर्वैर्दिव्यैः प्रार्थ्यमानः स्वयम्भूरस्राक्षीद्द्वौ चापकाण्डावखण्डौ ॥ 104

तावादाय ब्रह्मसृष्टौ विरोधात् क्रुद्धावेतौ दीर्घयुद्धं व्यधाताम् ।
तत्रेशानं जम्भितं धन्व जज्ञे शक्त्या विष्णोःस्तम्भितःशम्भुरासीत् ॥ 105

---

1. वंशनेतान् 2. चापेरोपं 3. वृथास्त्वं 4. भावादवादीत् 5. तस्या गोधनं ।

दैत्यारातिं मेनिरे तत्र मुख्यं सुत्रामाद्याः[1]पूरूषस्त्वं स एव ।
तस्माच्चापं प्रागभांक्षि स्मरारेः धन्वागृह्णाः सम्प्रतीदं त्वदीयम् ॥ 106

भक्त्याऽमर्त्याराम रक्षोविराम श्रीराम श्रीराम लोकाभिराम ।
जानामि त्वां जागरूकं त्रिलोकीसन्त्राणार्थं शाङ्र्गंधन्वानमेव ॥ 107

काकुत्स्थेन्दो काश्यपर्षेर्निदेशादत्रावन्यां नो वसाम्येकरात्रम् ।
संरोद्धव्यस्तन्न मे स्वैरचारः पूर्वं लब्धान् पुण्यलोकान् निरुन्धि ॥ 108

आकर्ण्योक्ति भार्गवस्य न्यरौत्सीत् बाणेनैकेनैव तद्धर्मवर्त्म ।
[2]ऐक्ष्वाकेन्द्रस्तं तथाप्येनमाख्यन् धात्र्यां सर्वे धार्मिकोत्तंसमार्याः ॥ 109

रामः साक्षाद्ब्रह्म तस्यावलोकप्राप्तानन्दात् स्वार्जिताः पुण्यलोकाः ।
नीचैरित्यालोच्य तन्निःस्पृहः किं न्वेषोऽभूदित्यब्रुवन् केऽपि धीराः ॥ 110

भूयोऽप्याख्यद्भार्गवस्तत्स्वभावं व्यक्तीकर्तुं व्यग्रमाख्यां तवाग्रे ।
क्षन्तव्यं तन्नाथ जातो भवत्तो न्यक्कारोऽयं मे पुरस्कार एव ॥ 111

इत्यालप्य क्षिप्रमिक्ष्वाकुवीरं तेजोराशिं त्रिस्स पर्येत्य रामः ।
तस्यानुज्ञां मूर्ध्नि कृत्वा प्रतस्थे वन्यावलग्द्वारणेन्द्रं महेन्द्रम् ॥ 112

तस्मिन् गोत्रोत्कम्पहेतौ प्रयाते नीहारौघे निर्गते दृश्यमानम् ।
संज्ञां सद्यः प्राप्य सर्वेऽप्यपश्यन् शूरश्लाघ्यं राघवं शूरमेव ॥ 113

धर्मस्याद्यं(धाम)धैर्यस्य मूलं धाम्नस्सीमा धन्ववेदस्य मर्म ।
वाग्मित्वस्यावास एवायमित्थं तुष्टा रामं तुष्टुवुस्तत्र धीराः ॥ 114

वीरालापं [3] तन्मयाज्जल्पतोऽपि प्राणत्राणं रैणुकेयस्य चक्रे ।
राजा सोऽयं राघवो नः कृपावान् धन्यं जन्मेत्यालपंस्तत्र योधाः ॥ 115

---

1. पूरुषस्त्वं 2. इक्ष्वाकेन्द्रः 3. यन्मयाज्जल्पतोऽपि ।

पश्चाद्रामस्तातपादौ ववन्दे दोर्भ्यां सोऽप्याश्लिष्य जेतारमेतम् ।
प्राप्तो भीत्या भार्गवात्पारवश्यं तोषोन्मेषादप्यसौ तादृशोऽभूत् ॥ 116

ऊर्वश्याद्या नृत्तविद्यां व्यवृण्वन्नुक्तैर्देवी कीर्तिगाथामगासीत् ।
भर्गो ढक्कावादभङ्गीं विवव्रे श्रीरामस्य श्लाघनीये जयेऽस्मिन् ॥ 117

आयातेषु द्रष्टुमात्मप्रभावं [1]ले(खेषूद्य)न्नाथमुख्येष्वथाऽसौ ।
तत्रेक्ष्वाकु[2]ग्रामणिं (गाधिसूनुः)पाणौ पत्युः[3]प्राणिनां न्यस्यति स्म ॥ 118

रामं दृष्ट्वा निर्जरा व्योम्नि सर्वे मर्त्याश्चोर्व्यां निर्निमेषत्वमापुः ।
तुल्यं तेभ्यस्त······मीप्यभाक्तौ भाग्याधिक्य······त्कर्षमे···॥ 119

(रम्यो)त्कृष्टमहःप्रहृष्टमनसा राज्ञा तदाऽऽज्ञापितो
दीव्यन् दिग्वलयाक्रमक्षमसमुल्लासेन सेनागणः ।
शीतांशोरुदये सति स्थितिम(यन् श्री)[4]मानिवांभोनिधिः
सीमातीतरसोन्मिषत्कलकलोद्दामा जगाम क्रमात् ॥ 120

पद्मस्यन्दिमरन्दबिन्दुपरमानन्दाश्रुसन्धायिनः
पंक्तिस्यन्दनमागतं परिणयोदारैः कुमारैस्तथा ।
आश्लिष्यन्ननुयातषट्पदपरीवाराः समीराशनै-
[5]रग्रे स्वागतभाषितायितकवीशंसारवास्तारगाः ॥ 121

सद्योविस्मयकृन्निरोष्ठ्यकवितासन्दर्भधारासुधा-
सारोर्मीपरिपूरितश्रुतिसुधीसंभाविताभिख्यया ।
देव्योद्यन्मतिसख्यया मधुरवाण्यम्बाख्यया निर्मिते
श्रीरामायणसारकाव्यतिलके सर्गोऽजनिष्टाष्टमः ॥ 122

इति श्रीरामायणसारकाव्यतिलके
अष्टमः सर्गः



1. ले···नाथमुख्येषु 2. ग्रामणि 3. पाथसां 4. मन्निवांभोनिधि 5. अग्रे स्वागत-भाषितायितकपीसंसारवास्थारगाः ।

# श्रीरामायणसारकाव्यतिलके

## नवमः सर्गः

तदनन्तरं दशरथस्य सैनिकाः सरयूसमीरसरयोज्झितक्लमाः
नियतश्रियं रघुनृपालपालितां निरवर्णयन्त नगरीं गरीयसीम् ।। 1

अवलोक्य तां कतिचनानटन् भटा जहसुश्च केचन मुदा जगुः परे ।
असिवल्लरीरचलयन्नथापरे परिरेभिरे कतिपये परस्परम् ।। 2

प्रसभं निगृह्य सृणिना मनाक् ध्वजान् प्रणमय्य पाणिकृतकुम्भलालनाः ।
मणिगोपुरान्तरपथं मदोत्कटान् करिणः(कथञ्चि)दनयन्निषादिनः ।। 3

अनृजून् हयांश्च बडबा नवाश्शनैरनुसंविधाय गतिभेदपेशलम् ।
पुरतस्तुरङ्गमवरांश्च सादिनो नटयन्त एव जनतामनन्दयन् ।। 4

स्थपुटस्थलेष्वपि शनैरनाहतक्रमचक्रमस्खलित[1]सैन्धवोरसम् ।
अविशीर्णसादनमचालयन् परे रथमण्डलीं रथकुटुम्बिनस्तथा ।। 5

परशुक्षुरप्रपरिघासि[2]धेनुकाघनधन्वतोमरकृपाणपाणयः ।
निबिडा(हवायित)खले नृपाज्ञया निभृतक्रुधे प्रययुरुद्भटा भटाः ।। 6

अतिसङ्कटे बलविशङ्कटे बलेऽप्यमिथोऽङ्ग[3]सङ्गमनमीशितुः पुरः ।
फलकौशलं बहु निरूप्य चर्मिणः सफलं व्यधुर्निजनिजं परिश्रमम् ।। 7

महारथो दशरथो......दो महितो महीसहचरैर्महा महः ।
......, श परमाद्भुतप्रदं.........नद्धःतनवितानतोरणम् ।। 8

---

1. सैन्धदोरसम् 2. धेनुकौ 3. सङ्गमननीशितुः ।

मुरलीमृदङ्गजयशङ्खझल्लरीमुरजादिवाद्यनिनदो मुहुर्मुहुः ।
मणिसौधगर्भमगमत्तदागमं वनिताजनाय पुरतो (निवेदयन्) ।। 9

रघुपुङ्गवोऽपि धरणीसुता[1]युतो
गुरुशुक्रसौम्यसहितः शचीयुतः ।
अमराधिनायक इवामरावती-
मनुजै (स्सहेत्य मृदितोऽ) विशत्पुरम् ।। 10

कनकालुकामणितरङ्गचामर-
व्यजनोपचारविधये रघुप्रभोः ।
सविधस्थिताननुचरान् समीक्ष्य त-
[2]त्सुकृतस्तवात्सुकृतिनोऽभवन् जनाः ।। 11

उपयम्य भूमितनयामुपागतं पुरु(हूत एत्य शुभवेषभूषितम्) ।
किमवेक्षितुं स्थलरथस्थकाञ्चनप्रतिमोपधेर्बहुविधाकृतीरधात् ।। 12

गिरिजाधवो नु किमु भारतीपतिः कमलाधिपो नु किमु वा रतीश्वरः ।
किमु रोहिणीश इति तं कुतूहलादवनीसुतान्वितमतर्कयन् जनाः ।। 13

अवलोक्य राममभिरामविग्रहं विपुलेक्षणा नगरवीथिमागतम् ।
चरितार्थतां गमयितुं स्वचक्षुषी परमुत्सुकत्वमभजन् पृथक्पृथक् ।। 14

किमु रामचन्द्रदरहासचन्द्रिका-
रसपारणां नयनयोश्चकोरयोः ।
अचिराय कल्पयितुमाशयैकिका
निरियाय तासु पुरतो नितम्बिनी ।। 15

सुरभिं ककुत्स्थतिलकं सुवृत्तता-
जुषमेणनाभिसुषमं परा वधूः ।

1. सदा 2. त्सुकृत ।

तनितुं ययावभिमुखं किमादरात्
विधुतैणनाभितिलकक्रिया रयात् ॥ 16

स्तनयोः श्रियैव शिवधन्वभूधरं धुतवत्यहं रघुपते त्वमक्षिपः ।
शिवधन्व दार्विति विवृण्वतीव काऽप्यगमत्तदर्पितकरा विलासिनी ॥ 17

स्मृतिगौरवादुपनतां रघुप्रभोः प्रकटीचिकीर्षुरिव तत्सरूपताम् ।
मृगनाभिचर्चिततनुर्मृगेक्षणा [1]गलदुत्तरीयवसनागमत्परा ॥ 18

सहितं विदेहजनुषा रघूद्वहं जलदं तटित्सखमवेत्य साध्वसात् ।
अधिराजवीथि हरिणेक्षणामणेः किमु हंसकेन जगले पदाम्बुजात् ॥ 19

पदपांसुनाऽप्यचलयशिलां पुरा
रघुवीर तद्भवदवेक्षणागताः ।
[2]स्तिमिताः स्त्रियो रचयसे किमीक्षणा-
दिति काचिदिन्दुवदना मुदाऽभ्यधात् ॥ 20

श्रवसि त्वदागमकथां यदा न्यधां प्रसवायुधः प्रतपति प्रसह्य माम् ।
तपनान्वयेन्द्र तव धन्विता कथं न्विति नर्मगर्भमितराऽभ्यभाषत ॥ 21

इतरा निरञ्जनजनेक्षणीयतामहिताकृतिं रघुपतिं वितर्क्य किम् ।
तदवेक्षणाय ततसम्मदाश्रुभिस्तरुणी निरास्यत विलोचनाञ्जनम् ॥ 22

अचिराय हंसकुलमुख्यमादरात् विलुलोकिषुर्विपुललोचना परा ।
अवमत्य हंसमपि पोषितं पुरः स्थितमाजगाम गतिविघ्नकारिणम् ॥ 23

(प्रसमी)क्ष्य[3]सेतुकृतिहेतुमग्रतः
प्रमदामणेर्द्रुतगतेः पयोधरौ ।

---

1. गलदुत्तरीय वसना गमत्वरा 2. स्तिमिता स्त्रिये 3. सितुकृति ।

अवनीधरावनुपदं परिप्लवौ
निममज्जतुर्नि (जभरात्) [1]श्रमाम्बुधौ ।। 24

अवलोकितुं रघुकुमारमायति श्रवणावतंसमभितो (नवोत्पलम्) ।
निजयानसम्भ्रमनिभेन तत्तनुद्युतिचौर्यधुर्यमिति किं न्यपातयत् ।। 25

रत्नकोटि धाम्नि रविसन्ततिप्रभा[2]वृतया वसत्यमुमुदीक्षितुं तदा ।
सुदृशस्त्वरागतिजुषो नु का.........ग.........म.......।। 26

हृदि रामभद्रसमुपागमोत्सवं
दधती तदीयसविधं समागता ।
सुमुखी वशा स्वकरलाज (शी) कर
प्रकरानवाकिरदमुष्य मूर्धनि ।। 27

रघुपुङ्गव [3]त्वयि तनुर्लगेन्न मे.........................त्सरौ ।
तरले [4]स्तने विनिहितेन पाणिना कृशमध्यमाऽस्य सविधं किमानदत् ।। 28

[5]रतिनाथकोटिरमणीयमा धवोऽ)
(भ्युप) याति राम इति दूतिकाजने ।
निगदत्यथोऽङ्कित (म) गाद्द्रुतं परा
[6]विगल..........कम..........ग्राहा ।। 29

अधिनाभि पद्मनभि दृश्य[7]कोः समग्रं रवुनेतुराहितवतोऽद्भुताय किम् ।
वपुरप्यधादखिलमव्यतान्तया वनिताकटाक्षमयवारिजस्रजा ।। 30

फलके लिखन्त्युप (ल) गा नतोदरी प्रविहाय चित्रमचिराय रागतः ।
सविधस्थितं समवलोक्य राघवं फलके लिलेख हृदि चित्रमेकिका ।। 31

---

1. क्रमाम्बुधौ 2. वृतयापि सत्यमुमुरिक्षितुं 3. त्वयितुजो लगिन्नमे 4. स्तते
5. रथिनाथ 6. विलग 7. को स्मयं ।

युवमानसे विंदधतो महोत्सवं मदनस्य दर्पमथितुः पुरद्रुहः ।
धनुराधुनोद्दशरथात्मभूरिति [1]प्रमदाद्ययौ युवतिका समीक्षितुम् ।। 32

रघुवीरवीक्षणरसानुभूतितः समुदीतयाञ्जनयुजाश्रुधारया ।
अपरा [2]कुहाविचलनाय लोचने कृशमध्यमा विगलिते किमातनोत् ।। 33

प्रमदामणे [3]रघुपतीक्षणोदितः प्रमदः स्वदत्तपुलकौघकञ्चुके ।
सति नूतने [4]प्रथमकञ्चुली वृथेत्यभितर्क्य तामदलयन्नु नैकधा ।। 34

रघुनायकं विमलहारनायके गरुडोपलाकृतिमवेक्ष्य बिम्बितम् ।
अयि नायकोपरि च नायकोऽजनीत्यपराऽवदत्प्रियसखीमणूदरी ।। 35

अनवेक्ष्य च स्तनभरं पदे द्रुतं [5]समुपेत्य रामसमुदीक्षणोत्सवम् ।
दिशतो ममेत्यकृत किं तयोः परा श्लथहारमौक्तिकचयाभिषेचनम् ।। 36

असमाप्य विभ्रमवने निजार्चनामतिवेगमागममथापि मन्मथः ।
पुरतस्स एव वसति प्रसन्नधीरिति राममेक्ष्य निजगाद काचन ।। 37

हरिणेक्षणा विमलहारमालिकामतिसम्भ्रमात्करतलेन बिभ्रती ।
अगमद्वरीतुममुमादिपूरुषं [6]कमलेव सम्भृतमधूकमालिका ।। 38

पदविक्रमप्रसृमरा मृगीदृशः
शुभनासिकासुरभिचम्पकानिलाः ।
अरुधन्मुखाम्बुजगतान्मधुव्रतान्
न तथाविधा भुवि किमान्तरङ्गिता ।। 39

समुपेयुषी रघुवतंससन्निधिं सरसीविहारमपहाय काचन ।
तदवेक्षणामृतरसावगाहनं तरसा ससाद सरसा कथं [7]न हि ।। 40

---

1. प्रमादार्यया युवति के 2. कुहाव्यचलनाय 3. रघुपतिक्षणोदितः 4. प्रथनकञ्चुली
5. समुपत्य रामसमदीक्षणोत्सवम् 6. कमलेन 7. नह ।

अथ मैथिलीं कनकगौरविग्रहा
मवलोक्य सेयमुचिता रघुप्रभोः ।
कमलेक्षणाऽप्य(हृह भूम्य)पत्यमि
[1]त्यनुवन्नरालचिकुराः पृथक्पृथक् ।। 41

अरुणाङ्गुलीदलविलासपेशलं वनजातमेव [2]वसुधातनूभुवः ।
प्रचकास्ति पादयुगलं श्रियःपदं तदिदं दधाति नखराभिरामताम् ।। 42

[3]बहुनालमध्यभवनोऽपि पल्लवः पवनागमेऽपि विचलन् [4]कुजापदा ।
शतपत्रशासनकरं [5]महद्यशो दधता कथं नु समतामवाप्नुयात् ।। 43

चरणं निरूढकिसलावमानना चरणा विकस्वरसरोज······ ।
················मसौकुमार्यं यो शरणं चकास्ति [6]जनकेन्द्रजन्मनः ।। 44

अदसीयगुल्फयुगलं विलासतो रतिमन्मथभ्रमरिकाधिकश्रियम् ।
अपहृत्य नित्यमुपयात्यदृश्यतां ब्रुवते सुवृत्त··· ··········· ।। 45

···························प्रवर्तते महिनन्दना[7]मृदुलजालकात्मना ।
वहते नवं कमलगर्भवैभवं तनया जगत्यनुसरन्ति मातरम् ।। 46

जयतो जगत्त्रयमनन्यजप्रभोर्जयकाहली विलसना········ ।
हरते महीदुहितुरात्मतेजसा किमसाध्यमस्य विहते पुरि श्रियाम् ।। 47

कदली तदूरुयुगलींमवेक्ष्य किं तरलीभवत्तनुरुपेयुषी नतिम् ।
कुरुतेऽञ्जलिं कुसुमकोरकात्मना स्थितिरन्तरे गुणविदां तथा न किम् ।। 48

उपलभ्य भङ्गमिदमूरुतो गुरोः सृजतो मदं द्विपकरात्परिप्लवात् ।
उरुणा भयेन जडतामुपेयुषी कदली समत्वममुना कथं व्रजेत् ।। 49

1. त्यनुवन्मराल 2. वसुधातनूभवः 3. बहुसालमध्य 4. कटिःपदा 5. महीभरा
6. जनकेन्द्र चिन्मनः 7. मृदुलजं लुकात्मना

पृथिवींभुवः पृथुनितम्बतो भिया सलिले निमग्नमथ शारदागमे ।
प्रकटीभवत्पुलिनकूटमीक्ष्यते त्रपया सितच्छदधृतावकुण्ठनम् ।। 50

धरणीभुवस्ततनितम्बमण्डली वसुधैव नो यदि कथं नु वर्तते ।
[1]विविधान्तरीपविभवानुबन्धिनी विपुला सती वसुमतीति विश्रुता ।। 51

अवलग्नमङ्घ्रिरशनातनूभुवो वितनोति सत्पथविलङ्घनं सदा ।
विदधाति पञ्चवदनस्य नन्दनं कृशिमानमेति तदिदं क्रमात्ततः ।। 52

अदसीयमध्यमत्रिरादचूचुरन्निजमध्यरीतिमिति पाण्डुताकृतिः ।
स्वमनोव्यथाविवरणाय किं हरिर्विवृताननो विवलते समन्ततः ।। 53

परमाणुरभ्रमपि सिंहमध्यमं तदिदं त्रयं परमिह क्षमाभुवः ।
अवलग्नतुल्यमिति वक्तुमेव किं विदधे वलित्रितयमत्र वेधसा ।। 54

वलयस्तनुद्युतिपयोधिवीचिकावलयस्तु भूमिवलयस्तुता कृतेः ।
[2]लवलीलतास्वलवलीढविभ्रमं लवलीलया विधुनुते महीभुवः ।। 55

अदसीयनाभिवलयाज्जलभ्रमी [3]चकिता बभाज शरणं महाह्रदम् ।
बत सोऽपि दर्शयति तां बहिः स्वयं जगतीह विश्वसिति को जडाशयम् ।।56

मृगलुब्धकेन नवयौवनात्मना परमङ्गजं प्रमदतो विजृम्भितम् ।
नियतं निरोद्धुमिव निर्मितं [4]बिलं विलसत्यथो ललितनाभिमण्डलम्।। 57

[5]अलिमौर्विकान्तरभुवो रतेर्हरिन्मणिमालिका तरुणिमोदया[6]श्रियः ।
हृदयङ्गमा हरिणनाभिरेखिका धरणीभुवो जयति [7]रोमराजिका।। 58

---

1. विविधान्तीरीव 2. अवलीललतास्वलवलीढ 3. चुकिता 4. खिलं 5. अलिमौर्विकान्यतिभुवो 6. श्रियम् 7. रोमराजिका ।

शिखरीन्द्रशासनकरौ पयोधराविति किं विचिन्त्य भजनार्थमेयुषा ।
जलदावली वसुमतीजनेरतस्यसिततवभाग्जयति रोमवल्लरी ।। 59

तरुणिम्नि नाभिबिलसीम्नि निक्षिपत्यचिरात्पदं तदुदरादुदित्वरी ।
भुजगीव रोमलतिका प्रकाशते धृतकालिमा वसुमतीतनूभुवः ।। 60

[1]परमोन्नतात् क्षितिभुवः पयोधरादवमानवान् बहुविचारमाप्तवान् ।
अनुरञ्जनाय किमदोभिदाधरं शिखरी दधाति शिरसा पयोधरम् ।। 61

मिलितं तदाननमिदं [2](सुनिर्मलं)
(किमु) दृग्युगं किमु समीरमञ्जुलम् ।
अमलीमसं किमिभकुम्भयुग्ममि–
त्यसकृन्मतिं सृजति तत्कुचद्वयम् ।। 62

धुनुतः [3]स्तनावभवतां धराभुवो रघुनेतृसन्ततिपते रवेः प्रियम् ।
.........रियमाततं............ कथयाम्यधः कठिनतां कथं न्वहम् ।। 63

पृथुतामुपेत्य पृथिवीभुवः स्तनौ निजधर्मतो निखिलमेव दूरतः ।
प्रविधूय भूधरकुलं पटुश्रिया तनुतोऽन्वितौ सकलचक्रशासनम् ।। 64

अदसीयबाहुलतया निराकृतं विदधद्बिसं पटुतपोऽपि पुष्करे ।
किमिदं तुलानधिगमात्तचिन्तया दलदन्तरेति शतधा सरन्ध्रताम् ।। 65

जनिकाल एव मलिनत्वमेयिवान् परुषाभिदृश्य पटिमा तृणध्वजः ।
सदृशो भवेदमलिनश्रिया कथं [4]मृदुना भुजेन मिथिलेन्द्रजन्मनः ।। 66

अरविन्दमह्नि शतधा सहस्रधा
दलितं तदीयकरधामतर्जितम् ।

1. परमोन्नते 2. ...र्मला 3. स्तनौरभवदं 4. मुदुना ।

[1]दिवसान्त एव परिमीलितोदरं
निवसत्यदोनिभमिदं [2]कथं भवेत् ।। 67

परिधूतचूतमहिजातपल्लवः परिफुल्लहल्लकपराभवोद्यतः ।
अदसीयपाणिरवनीतले मृदुः परिपीड्यते परमिति [3]द्युतिप्रथा ।। 68

कुचरेखया निजतुलासमन्वितं
स्वपरिग्रहीत्यमुखमेत्य शब्दनम् ।
स्वरतो दरं परिधुनोति तद्गलो
किमु लोहलः स्फुरगिरा समो भवेत् ।। 69

श्रयितुं तदुज्ज्वलगलश्रियं दरः कमितुः श्रियः [4]करमुपाश्रयन्नपि ।
तदलाभतः किमयशो [5]वदत्यदः परिपूरणानिलवंशवदालिभिः ।। 70

[6]अवनीजनेररुणकान्तिसम्पदा
दशनच्छदस्तपति चूतपल्लवम् ।
ग्लपितं प्रकल्पयति बन्धुजीवकं
बहुधा विदारयति [7]बिम्बिकास्थितिम् ।। 71

अरुणोपलं कठिनमेव विद्रुमं पतनैकशीलमपि बन्धुजीवकम् ।
ब्रुवते स्वतुल्यमिति किं क्रुधा पुनः पुनरेति रागमवनीभुवोऽधरः ।। 72

धरणीभुवो विमलदन्त पंक्तितः
प्रतिपद्य कुन्दतिलकाः पराजयम् ।
अभितापमन्तरिव धर्तुमक्षमाः
परिकल्पयन्ति हिमवारिसेवनम् । 73

---

1. दितहन्त एव परिमीलितादरं 2. रथं 3. द्युतिप्रथाम् 4. दरमुपाश्रयन्नपि
5. वदात्यदः 6. अवनेजनेः 7. बिम्बिकस्थला ।

स्वमवेत्य नित्यधुतवज्रवैभवं नवमौक्तिकालिमुदधौ निमज्जतीम् ।
रदरेखिका गणयते न भूभुवः [1]किमु पीडयेत्परभुवं महानिधिः ।। 74

भुवि शर्करा क्षितिभुवो जिता गिरा परिभावजातसितिमोदयेन वा ।
तदनारतारचितबन्धनेन वा नियतं सिता भवति तन्न वेद्म्यहम् ।। 75

गरिमान्विता घनरसानुसङ्गतो गरिमत्यजस्तदनुषङ्गतः क्षणात् ।
[2]मघुनो धुनोति खलु माननीयतां महिजन्मनो वचनमाधुरीधुरा ।। 76

मकरन्द एतदुदितोदितश्रिया परिभावितो भुविकरप्रकाशने ।
असमर्थतामधिगतो नु मन्दतां भजते [3]लताप्रसवगर्भमाश्रितः ।। 77

अतिवज्रसृष्टमदसीयनासिकाविभवं विलोक्य किमु चम्पकं रुजा ।
अनवाप्यमौष्ण्यमयते ममैव रैस्तत एव तत्परिहरन्ति षट्पदाः ।। 78

नवनीयवृत्तिरदसीयनासिका कनकोज्ज्वलस्थितिममुष्य सम्मता ।
समुपात्तनव्य······ ·············यत्यतनुराज्यपालनम् ।। 79

इदमीक्षणद्वितयमीक्षणश्रिया
कलयेत्तदात्मनि कदा नु वापिकाम् ।
इति वीक्ष्य निश्चलदृशो दिशां मुखा
न्य(भि)तो [4]भवन्त्यनिमिषा भयाज्झषाः ।। 80

सृजतो महोत्पलकुलावमाननं नयनद्वयस्य निमिराजजन्मनः ।
कियदुत्पलाभिभवनं कियत्तिमे [5]गिलनं तिमिङ्गिलगिलस्य यादसः ।। 81

---

[1]. किमुपाडयेद्धरभुवं [2]. ···मनोधुनोति [3]. लताप्रसवगर्वमाश्रिता [4]. भवत्यनिमिषा
[5]. गिललं तिमिंगिलगिलस्य ।

हृदि खञ्जरीटमिदमीक्षणश्रिया
गणयामि क्रिण्ठितगतिं ततः किल ।
वनसीम्नि खञ्ज इव नित्यमाचरन्
स दधाति खञ्जन इति प्रथामयम् ॥ 82

पररक्षया रुचिमुपेत्य दर्पणप्रतिमां दधत्तदनु चोलभाक्तुलाम् ।
अयतां किमप्रतिमतत्कपोलयोः सुकुमारयोः सुषमया निराकृतम् ॥ 83

ततिसंहृतात्तकरिपोतकाननं निगदन्ति [1]दन्तमुपहृन्ति तत्समम् ।
.................... .. ................................॥ 84

तरलभ्रुवां तनुविभामदं नवद्वितयान्तरीपजनुषां हरेदियम् ।
इति बोधनाय विधिसृष्टया नवद्वयसंख्यया श्रुतिनिभेन भूयते ॥ 85

नियतोज्ज्वलेन दुहितुर्निमिप्रभोः श्रवणद्वयेन हृतसारगौरवा ।
रुचिर्दुर्विधाऽन्वहमनादृता जनैः परिशुष्कतां [2]भजत एव शष्कुली ॥ 86

असितेक्षुकार्मुकमनन्यजप्रभोः सुषमाभुवो महिभुवोर्भ्रुवोर्युगम् ।
परिदर्शयन्मधुरतां प्रकाशयत्यलिपंक्तिमेचकगुणं ततो नु किम् ॥ 87

क्षितिनन्दना परिणिनीषुरुत्तमः पुरुषः पुराहितमुरारिकार्मुकः ।
स हरिष्यतीति विवरीतुमेव किं न्वतनोद्द्विधा कमलभूरदोभ्रुवौ ॥ 88

शशिखण्डमद्रितनयामर्णेगिरामपि मातुरस्ति न सरोजसद्मनः ।
अहहेत्यदो जनुषि नक्रभूषणं विदधाविदं [3]तदलिकं किमात्मभूः ॥ 89

निटलश्रिया निमिनृपालजन्मनः
परिभावितस्तदुपमानलब्धये ।

---

1. दन्तमुपहन्त 2. भजतयेव 3. तदलिकिंत्मनात्मभ : ।

मदनार्धचन्द्रविशिखो [1]नभश्चर
त्यमनाङ्निमज्ज्य [2]शरधाववाङ्मुखः ।। 90

विजितस्य तन्मुखरुचाम्बुजन्मनो दयितस्य पादभजनक्रमान्निशि ।
विलसन् दिने विधुत एव तत्करैः कथमश्नुते तदुपमाकथां [3]विधुः ।। 91

अदसीयवक्त्रमधिगम्य राजतां [4]वसुवर्ममाचरितवध्वराजकम् ।
प्रतिवासकं प्रकटयत्कुशेशयं मधुपावृतं न हि तृणाय मन्यते ।। 92

जलराशिकाञ्चिजनुषः शिरोरुहां
रुचिषण्डदण्डितशिखण्डिमण्डलः ।
चकितोऽधिमह्यतिशयाच्छिखी रुवन्
सकलैर्मयूर इति कथ्यते जनैः ।। 93

निमिजन्मनः कचरुचा निराकृत-
श्शरजातमाश्रयति चन्द्रकी सदा ।
(न) कदापि [5]भूमिभृदनन्तसेवनं
विजहाति हा जलधरो विचारतः ।। 94

अदसीयकुन्तल [6]सदोजसो भया-
दवगाहते जलनिधानमम्बुदः ।
तृणमत्ति च त्रिदशपुङ्गवोपलः
फणिभुक् पदा स्पृशति [7]जातु पद्धतिम् ।। 95

चिकुराः स्वभावकुटिलाः क्षमाभुवः
भ्रमयन्त्यलीन् परिभवन्ति बर्हिणः ।

1. नपश्चर 2. शरदाववाङ्मुखी 3. विदुः 4. वसुवममाचरितवध्वराटकम्
5. भूमिभ्यदसन्ति सेवनम् 6. सदोजसे 7. नातु ।

असितोपलानपहसन्ति तोयदा
[1]नवमं नयन्ति (सहजा)त्तथाविधाः ।। 96

·········तमब्धिमेखलाजनु·········गभावमधिगत्य चम्पकम् ।
रघुवीरवीक्षणमिलिन्दरञ्जनं तनुते भवेत्किमु तपःस्थितिर्वृथा ।। 97

तनुरोचिषात्मजयिनं रवूद्वहं परिचिन्त्य सान्त···कृतेपय········।
·········प्यति···कृतिस्तदवे···················द्वलति केतकं यतः ।। 98

वैदेह्या वपुरब्जभूर्वसुमयं चूर्णं हरिद्रारसं
शम्पादीधितिकन्दलं च विदलच्चाम्पेयपुष्पानिलम्
[2]जाग्रत्काञ्चनकेतकोदरवियत्संयोज्य धीकौशला
दस्राक्षीन्नयदीदृशो मधुरिमा तस्याः कथं स्यात्तनौ ।। 99

इति स्तुतीरितस्ततो वितन्वतो वधूजनान्
कृपातरङ्गितैरिमान् कृतार्थयन्नपाङ्गितैः ।
सुधीभिरीरिता गिरीश[3]चापभेदनादिमाः
कथा स्तथावकर्णयन् जहर्ष राघवर्षभः ।। 100

प्रत्यग्रागरुधूपधूमजलभृन्नृत्यन्मयूरीकुलं
संफुल्लाब्जवितानरज्यदलिनीझङ्कारगानोज्ज्वलम् ।
कार्यव्यग्रजनारवावृतमणीसौधप्रतिश्रुन्महा-
तूर्यध्वानभरं पुरं रघुपतेरक्ष्णोर्वितेने मुदम् ।। 101

वैदेहीसहितेन सद्गुणगणारामेण रामेग त-
त्सौहार्दानुगताशयैश्च [4]तनयैरन्यैस्समासेवितः ।
रम्भातोरणपूर्णकुम्भसुमनस्संभारसंभावितं
भेजे पंक्तिरथः पुरः परपुरीसामन्तमन्तःपुरम् ।। 102

---

1. नधमं 2. जाग्रत्[illegible] 3. चा[illegible]दनादिमाः 4. तनयैरन्यैः ।

तातोक्त्या मणिचित्रमात्मभवनं रामोऽथ सीतासखः
क्षीराम्भोधिमिवाविवेश सुगुणः श्रीमान् पुमानादिमः।
प्रासादे कृतकावनीधरवरे पद्माकरे विभ्रमा-
रामेऽप्येष तया समं प्रसितया रेमेऽभिरामाकृतिः ॥ 103

[1]बहुलदयान्वितश्शुभरतो (भरतो) मगध
क्षितिपतिनन्दनातनुभवौ च महाविभवौ।
अमितमृदङ्गनिस्वनममी महिलावहिता
विविशुरथो गृहान्निजनिजान्मणिजालवहान् ॥ 104

माधुर्यैकधुरंधरान्ध्रकवितानिर्माणसम्मान्यया
देव्योद्यन्मतिसख्यया मधुरवाण्यम्बाख्यया निर्मिते।
श्रीरामायणसारनामनि महाकाव्येऽतिभव्ये सुधी-
वर्गोल्लासनिशेषधाम्नि नवमः सर्गो मनोज्ञोऽभवत् ॥ 105

इति श्रीरामायणसारकाव्यतिलके

नवमः सर्गः



1. बहुलवयान्वितः शुभरतो।

# श्रीरामायणसारकाव्यतिलके

## दशमः सर्गः

नन्दनैरथ चतुर्भिरशेषानन्दनैर्नयकलां प्रथयद्भिः ।
सत्यसूक्तिसदनैर्वदनैः स्वैरब्जभूरिव रराज स राजा ॥ 1

तेषु राममभिराममुदारं वीक्ष्य सैष विनयादिगुणाढ्यः ।
यौवराज्यमहिमन्यभिषेक्तुं मन्त्रिणामनुमतो मनुते स्म ॥ 2

[1]प्रेमतोऽथ पृथिवीरमणेन प्रेषितो नयरतो भरतोऽपि ।
मातुलस्य हितमानसवृत्तेर्वेश्म [2]केकयपतेर्विजगाहे ॥ 3

उत्सवेक्षणकृतेऽथ धरित्रीवासवान्मगधकोसलमुख्यान् ।
आनिनीषुरचिराय पुरीं स्वां [3]प्रैषयद्दशरथः परमाप्तान् ॥ 4

पूषवंशशुभहेतुमयोध्यामेष भूषयितुमैन्दुमतेयः ।
अग्रसीम्न्यवहितानधि कर्तॄनादिदेश वसुधेशत्रिडौजाः ॥ 5

राजमौलि कुतुकार्थममीभिः कारिताः स्थलरथा[4]नवरत्नैः ।
राजमौलिरथ [5]इत्यधिकेर्ष्याः किन्ववरुन्धत महीं मणिगर्भाम् ॥ 6

वासरेऽपि घटिता वसुधायां दीपवृक्षविततिः प्रदिदीपे ।
अग्रतो दिनकरस्य न दीव्यत्यग्निरित्यपयशो विधुनाना ॥ 7

गन्धसारघनसारजलौघैः पूरिता प्रतिपदं पुरवीथी ।
कोसलेन्द्रतनयाशयवीथीमन्वरुन्ध घनहर्षरसार्द्राम् ॥ 8

---
[1]. प्रेमथोऽथ [2]. केकयिपतेः [3]. प्रेषयत् [4]. नवरत्ने [5]. इत्यधिकेष्या ।

तोयजाकलित[1]तोरणरम्भास्तम्भपंक्त्यगुरुधूपजधूमैः ।
क्षौमनिर्मितवितानवितानैश्चित्रमास्त मधुरैवमयोध्या ।। 9

गायतां मधुरगाननिनादैरप्यतर्जयत दुन्दुभिघोषैः ।
पूरियं पुरममर्त्यमनोज्ञं [2]पुष्पदाममहसा विहसन्ती ।। 10

तन्महोत्सवमवेक्षणकामाः स्वस्वसैनिकसहायसमेताः ।
आगमन्नधिकतोषमशेषा भूवरा धृतमणीमयभूषाः ।। 11

गूढजत्रुमनघं गुरुपुष्ये रामभद्रमभिषेक्ष्यति राजा ।
इत्युदीरितवता[3]मजपुर्यां प्रायशः कलकलः प्रथितोऽभूत् ।। 12

मन्थरा मलिनधीर्मणिसौधे तस्थुषी तदभिषेचनवार्ताम् ।
कीर्तितां पुरजनेन तदानीं केकयेन्द्रजनुषे निजगाद ।। 13

राज्यलाभविभवं रघुभर्तुः कुब्जया निगदितं कुतुकेन ।
सा निशम्य सविशेषममुष्यै [4]पाणिकंकणमदत्त परार्ध्यम् ।। 14

मन्थरा हृदि मलीमसबुद्धिं प्राप्य केकयमहीपतिपुत्र्याः ।
प्रायशो हितमतिं प्रथयन्ती [5]निःश्वसन्त्यथ रुषा निजगाद ।। 15

मोदसे मनसि किं न्विति मुग्धे राघवो यदि भवेदभिषिक्तः ।
लक्ष्मणः प्रथममेव तदीयः कैकयि क्व नु गतिर्भरतस्य ।। 16

प्राग्ददौ [6]वरयुगं प्रथने ते पार्थिवस्तदिह [7]पंकजनेत्रे ।
प्रार्थयस्व न परं त्वदधीनो वर्ततेऽद्य वितरेत्तदवश्यम् ।। 17

1. तोरणदम्भा 2. पुष्पदाममहहा 3. महपुर्यां 4. पाणिकंकणमधत्त पैरार्ध्यम्
5. निःश्वसत्यथ 6. चरयुगं 7. वंशजनेत्रे ।

तद्द्वयं किमिति पृच्छसि चेत्त्वं वच्म्यहं रघुपतेर्वनवासः ।
राज्यलाभभरणं भरतस्याप्येतदेव पतिमेत्य वृणीष्व ॥ 18

कुब्जया निगदिता कुटिलभ्रूरेवमावसदमर्षगृहं स्वम् ।
साऽश्रुवारि सृजती मणिचापप्रापिणी तटिदिवाम्बुदगर्भम् ॥ 19

मानिनीं निशि तदा मदनास्त्रैरर्दितः प्रभुरभाषत तन्वीम् ।
मा कृथा[1]मनसि मानमिमं यत्कांक्षितं तदधुना कलयिष्ये ॥ 20

तथ्यमित्यभिदधत्यवनीशे कैकयी कपटवर्मितचेताः ।
राघवस्य वनवासमथैषा राज्यलाभमवृणोद्भरतस्य ॥ 21

तद्गिरं तदनु कर्णकठोरां दीर्णहृत्समवकर्ण्य स राजा ।
वैणुकाग्रनिहतः प्रतिवारं वारणाधिप इव व्यथितोऽभूत् ॥ 22

द्वारभाजमुपहूय सुमन्त्रं कैकयी रघुवरानयनाय ।
[2]प्रैषयत्तदनु सोऽपि बभाषे ताटकामदभिदे तमुदन्तम् ॥ 23

राम एष धृतरत्नविभूषः स्यन्दनं समधिरुह्य कटाक्षैः ।
भूषितामथ पुरीमनुगृह्णन् पार्थिवस्य भवनं प्रविवेश ॥ 24

कैकयी महिसुताकमितारं [3]व्याजहार तमसावनुदेशः ।
[4]दत्तवांस्तव वनीमवनीं तु प्राप्तसन्ततफलां भरतस्य ॥ 25

राघवाश्रम विहाय सहायं हायनान् वस चतुर्दश वन्याम् ।
इत्यदो गिरमिमामपि शृण्वन् मौनमाप महिभृद्वरदानात् ॥ 26

---

1. मनमिमानमिमं 2. प्रेषयत् 3. व्याजहात्तमसावमदेशः 4. दत्तवांस्तदवनीमवनींतु

सैष सद्गुणमणीखनिरन्तर्धैर्यवान्न च चचाल तदुक्त्या ।
चण्डगन्धवहहिण्डनयोगात् चञ्चलत्वमयते हिमवान् किम् ॥ 27

म्लानतामलिनता चपलत्वं [1]मान्द्यमान्ध्यमभजन्न तदा तम् ।
संस्पृशन्ति किमु सर्वदिगन्तदंन्तुराणि तरणिं तिमिराणि ॥ 28

केकयाधिपसुतागिरमेतां मालिकामिव निधाय स मौलौ ।
एष गन्तुमुदयुङ्क्त वनान्तं तादृशं तमभिवाद्य नृपालम् ॥ 29

[2]तत्क्षणं स्व(ज)नतस्स कथां तां लक्ष्मणः समवकर्ण्य[3]विषण्णः ।
अग्रतः स्थितमवेक्ष्य रघूणामग्रगीरभणदाग्रहशीलम् ॥ 30

ईक्षसे मुहुरिषूनपि चापं चापलं विसृज कोपभरञ्च ।
तातवाक्य ारणी करणीया सूनुने(ति)भवता श्रुतपूर्वम् ॥ 31

[4]स्यन्दनास्पदमवन्यपि वन्यप्यात्तसिन्धुरहरिर्मम तुल्या ।
तत्र सौम्य मृगयादिविनोदप्रापिणी खलु वनी किमु चिन्ता ॥ 32

मान्य एव जगतोऽस्य मनोज्ञा मध्यमा बहुमता मम माता ।
एतदुक्तिकरणं जयलक्ष्मीप्रापणायभविता प्रथिताय ॥ 33

मानवान्वयपतिः स्वविधेयं मागधेयममुमेवमुदीर्य ।
वस्तुमाधित वने हृदयं तद्युक्तमस्य वसतो वनराशौ ॥ 34

लक्ष्मणाग्रजविवासनवार्तां तत्क्षणं समवकर्ण्य विषण्णा ।
कोसलक्षितिसहायकुमारी क्रन्दती सकरुणं कुररीव ॥ 35

---

1. मान्द्यमान्द्य 2. तत्क्षणं स्वनता सकथांतां 3. विषण्णम् 4. स्यन्दनास्पदम-वप्यपिन्य स्यात्त ।

मातरद्य हृदि मातनु चिन्तामश्रु सन्त्यज निरन्तरमक्ष्णोः ।
इत्युदीर्य विनयादथ रामः कोसलाधिपभुवं स ववन्दे ।। 36

आदरेण परिरभ्य कराभ्यामभ्यषिञ्चदमुमश्रुजलेन ।
व्यङ्क्तुमुद्यत[1]करी किल सेयं भाविनीं तदभिषेकसमृद्धिम् ।। 37

मानवान्वयपतिर्मतिशाली मातरं मृदुगिरा परिसान्त्व्य ।
केकयेशमगधेन्द्रदुहित्रोः पार्श्वमेत्य तदनन्तरमूचे ।। 38

केकयाधिपसुते भरतेन प्राप्तराज्यविभवानुपभुङ्क्ष्व ।
सूनुलालनवतीह सुमित्र मातरं मम समर्चय दीनाम् ।। 39

कैकयीं मगधजामपि रामः स प्रणम्य सकलानपि बन्धून् ।
प्रश्रयेण परिलाल्य बभाषे जानकीं स्वमनुसर्तुमुपेताम् ।। 40

कातरेक्षणयुगे कृशमध्ये कोमलाङ्घ्रियुगले कुसुमाङ्गि ।
वस्तुमुग्रमृगभाजि वने त्वं मानसे महिसुते यतसे किम् ।। 41

मैथिली मनुकुलोत्तममूचे शौर्यधुर्य रघुसिंह कुतोऽपि ।
धूतकण्टक भवद्भुजदण्डच्छाय[2]माश्रितवती न बिभेमि ।। 42

लोकदुर्लभभवत्क[3]रुणार्द्रालोकनामृतरसानुभवेन ।
क्षुत्तृषाश्रमरुजं परिधून्वत्यातनोमि भवदङ्घ्रिनिषेवाम् ।। 43

इत्यधीशमभिधाय विनीत्या बाष्पवारि बहुधा विसृजन्तम् ।
प्रेमतः प्रियसखीजनमेक्ष्य क्षोणिजा सबहुमानमभाणीत् ।। 44

लालयस्व ललिताङ्गि ममैतां शारिकां जलदवेणि मयूरीम् ।
प्रत्यहं नटय पालय कीरं पक्वबिम्बरदनच्छदने त्वम् ।। 45

---

1. चरी 2. माश्रयवती 3. करुणार्द्रात् ।

राजहंसमनुरञ्जय हार्दात् [1]पद्मिनि प्रतिदिनं बिसखण्डैः ।
कृष्णसारपृथुकं कृतसख्यं क्रीडयस्व मृगशावकनेत्रे ।। 46

इत्युदीर्य मिथिलेन्द्रतनूजा सस्वजे प्रियसखीमुपकण्ठम् ।
एकिकामुपगतां हितवाचं पाणिना परिममर्श पराञ्च ।। 47

कोसलेन्द्रजनिकेकयकन्यामागधीभिरथ पंक्तिरथेन ।
प्रेषिता प्रियतमेन सहैव क्ष्मासुताऽभवदसौ प्रयियासुः ।। 48

सौरसन्ततिपतेः पदसेवासौहृदे [2]दृढसमाहितबुद्धेः ।
मन्वते स्म मिथिलेन्द्रतनूजां तां स्थिरात्मभुवमेव हि सर्वे ।। 49

तत्क्षणं स्वमनुसर्तुमनस्कं भक्तिहार्दविनयै[3]र्भजमानम् ।
लक्ष्मणं निजमुखस्मितलक्ष्म्या राघवोऽनुजगृहे स तथेति ।। 50

सीतया मगधराजतनूजानन्दनेन च युतो नयशाली ।
अर्कसन्ततिगुरोरनुमत्या राघवो निरगमन्नृपगेहात् ।। 51

स्यन्दनं समधिरुह्य सुमन्त्रानीतमाशु निखिलस्तुतनीतिः ।
एष दाशरथिरेधितधैर्यो निर्जगाम नगरात्सममाभ्याम् ।। 52

माधवस्य सुमनोहितवृत्तेस्तस्य हर्ष[4]कृदभूद्वनयात्रा ।
अन्वयुस्तमखिला अपि पौराः षट्पदा इव तदा [5]निनदन्तः ।। 53

तान्विलोक्य तपनान्वयभर्ता भाषते स्म मम चेतसि नित्यम् ।
तिष्ठतैव भवतामहमासे मानसेष्वपि च[6]मुञ्चत चिन्ताम् ।। 54

---

1. पद्मिनी 2. दृढसमाहितबुद्धिः 3. भजिमानम् 4. वृदभूत् 5. ननदन्त
6. मुञ्चति ।

हे जनाः शृणुत संप्रति पित्रा दत्तमत्र भवनं वनमेव ।
तत्र मे निवसतः क्व नु चिन्ता [1]पार्थिवस्स भवतामपि मान्यः ।। 55

हन्त मामनुसृता बहुदूरं दुर्घटः परमितः परमध्वा ।
[2]तिष्ठतेति रघुराडभिधाय [3]स्यन्दनस्यदवशेन जगाम ।। 56

राघवं रथरयादथ यान्तं दृष्टचगम्यमनवेक्ष्य दिशासु ।
तत्र-तत्र परिमृग्य विषण्णा भूरिशः पुरजना ब्रुवते स्म ।। 57

रामचन्द्रभवदाननचन्द्रं द्रष्टुमुज्ज्वलमदिष्टवतां च ।
आन्ध्यमत्र नयनानि निरुन्धे कम्पते कुवलयं [4]किमु कुर्मः ।। 58

हार्दमस्ति करुणास्त्यनिशं ते राम नूनमिति [5]विश्वसितान्नः ।
त्वं विहाय गतवानसि विद्मो नैव ते मनसि [6]निर्दयभावः ।। 59

[7]इत्यदःपुरजना निगदन्तो रामचन्द्रममनागनुचिन्त्य ।
तद्रसानुभव [8]दृश्यतदध्व[9]न्यस्यमानदृश एव निवृत्ताः ।। 60

मन्थरामपिच केकयकन्यां मानवा महितले विनिनिन्दुः ।
भाविकार्यमवधार्य तदात्वे देवता दिवि नितान्तमनन्दन् ।। 61

आदिमेऽपि तरुगाम्बुदमूर्ति····स्तीरसीम्नि तम········ ।
·····························प्राश्य सूनुरथ पंक्तिरथस्य ।। 62

(पादपूत)तमसातटिनीकः प्रा(ञ्जलिं) गुहमुपागतमग्रे ।
रञ्जयन् मृदुगिरा रघुवीरस्तीरदेशमगमत्त्रिपथायाः ।। 63

---

1. पार्थिवस्य 2. तिष्ठवेति 3. स्यन्दनस्यदवते न जगाम 4. किमकुर्मं
5. विश्वसितान्न 6. निर्दयभावम् 7. इत्यदोपुरजनानि गदन्तो 8. दृश्यततदा
9. न्यस्समान ।

शृङ्गिवेरनगरे गुरुसौधासङ्गिवेरसरसीरुहमित्रे ।
तत्र सूतमुपमन्त्र्य सुमन्त्रं प्रैषयद्रघुपतिः प्रियवादी ।। 64

आहृतेन बहुपात्पयसाऽयं जाटजूटमचिराय विधाय ।
फालनेत्र इव भावतरौजा भासते स्म रघुराट्गुहसेव्यः ।। 65

दैवतीं तटवतीमथ तीर्त्वा स प्लवेन गुहसङ्घटितेन ।
क्षीरनीरनिधिपारमुपेतो नीलनीरद इव प्रचकाशे ।। 66

ते वने नटितदृष्टिनिपातास्तेवनेन तटिनीरथ तीर्त्वा ।
भूसुतारघुवतंससुमित्रासूनवो निरगमन्[1]लघुलीलाः ।। 67

सूर्यवंशतिलकस्सुमधूलीमार्जनोद्यतमदद्विपयूथम् ।
श्रुत्यधीतिशुकसन्ततिभारद्वाजमाश्रममथ प्रविवेश ।। 68

तत्र तस्य वसतो नियमीन्दोः शासनेन सरणिं स विदित्वा ।
निर्जरप्रमदकृद्रघुनेता निर्जगाम निजधैर्यसहायः ।। 69

[2]निर्गतस्य भरताग्रभुवोऽग्रे मार्गवेल्लनलसन्मृगवर्गे ।
चित्रकूटमुदयन्मणिशोभाचित्रकूटमवलोकयते स्म ।। 70

शृङ्गजाग्रदिरमन्वयसम्राड्भानुरोधभवमन्तुशमाय ।
[3]आर्चयत्तटझरेण कृतार्घ्योऽयस्ततैःसमवनीरुहपुष्पैः ।। 71

सैष राममनुसृत्य समायान् लक्ष्मणः फणिवरांश इतीव ।
प्रीतये प्रकटयन् मधु पौष्पं यत्र मन्दमनिलो[4]वहते स्म ।। 72

1. रघुलीलाः 2. निर्गतस्स 3. अर्चयत् 4. दलतेस्म

स्वातिशायिरुचमद्भुतमब्दं[1] जिष्णुचापमनिशं[2] श्रितमेक्ष्य ।
[3]तं तटिद्द्वययुतं त्रपया किं यद्गुहासु विविशुर्जलवाहाः ॥ 73

एकलेखधुनिकारणपादं तं व्यडम्बयत किं द्युनदीस्ताः ।
योऽधिपादमुपपाद्य सुरस्त्री[4]गीतिकाद्रुतविधूपलतोयैः ॥ 74

रामसंश्रयकृतेऽवनिजायै यत्र पुष्पजरजः पटवासम् ।
[5]आर्पयन्नवनिजाः फलपूर्वं प्रेम केनु सहजासु न कुर्युः ॥ 75

शङ्करः[6]स्वककुलैकवतंसं मेरुमानमितवानिति कोपात् ।
तत्कचं स्थगयते शिखरैर्यो दानवद्विपमृगादनयुक्तः ॥ 76

रत्नपादकटकं धवलांशुच्छत्रमेत्य च धराधिपतित्वम् ।
यो व्यनक्त्युभयपार्श्वसमुद्यन्निर्झराम्बुनवचामरलक्ष्म्या ॥ 77

नीलशोणमणिवैणवमुक्तापुष्यरागगरुडोपलकान्त्या ।
राघवागमशुभावसरे यो रङ्गवल्लिमकरोदधिशृङ्गम् ॥ 78

राम सानुवनसीम्नि वसामस्तावकाह्वयधरा इति वक्तुम् ।
यत्र चित्रमरचन् किमु रामास्तस्य चेतनहितस्य पुरस्तात् ॥ 79

रत्नदीपमलिझंकृतिगीतं पक्षिनादपटहारवपूर्णम् ।
माधवीमधुरसार्द्रमगात्तं राघवो धरणिजासहजाभ्याम् । 80

तत्क्षणेन विपुलां दलशालां लक्ष्मणेन विहितामधिगत्य ।
माननीयजलमाल्यवतीरे तत्र मित्रकुलमौलिरनन्दीत् ॥ 81

---

1. जिष्णुवापं 2. श्रितमीक्ष्य 3. तं तटिद्वय 4. गीतिकाधृत 5. अर्पयन्
6. स्वककुलैखवतंसं ।

राजसिंह हरि खड्गिकरीन्द्रान् पद्मिनीर्बहु[1]मणीमयकूटान् ।
कृष्णसारशुकपोतकपोतान् वीक्ष्य तत्र मुमुदे नरदेवः ॥ 82

तत्र भूमितनयासहजाभ्यां संवसन्ननुमतस्सकलानाम् ।
मौनिनां मनुकुलेन्दु[2]रयोध्याविप्रवासजविषादमहासीत् ॥ 83

सोऽथ सम्यगवकर्ण्य सुमन्त्रात्तत्र रामविपिनस्थितिवार्ताम् ।
वासवाय किल वक्तुमयासी[3]त्तत्कथां त्रिदिवमैन्दुमतेयः ॥ 84

तत्र दूतवचनैरुपहूतः स्वप्नजातदुरितं प्रविचिन्त्य ।
सानुजोऽवलत मातुलगेहे सान्द्रखेदभरतो भरतोऽन्तः ॥ 85

चित्रकम्बलमुखार्पणपूर्वं प्रेषितस्सपदि केकयराजा ।
पर्वतांस्तटवतीस्स विलङ्घ्य प्राविशन्निजपुरीमनुजेन ॥ 86

तां पुरीं तदनु कान्तिविहीनां सङ्कुचज्जनसमाजमुखा(ब्जाम्) ।
..........................................................शां विलुलोके ॥ 87

आर्तविप्रकुलमाकुलमित्रं त्रान्तमन्त्रि तरलाशयवृद्धम् ।
सोदरेण भरतो[4]परितोषात् पार्थिवस्य भवनं प्रविवेश ॥ 88

तत्प्रविश्य तमुदन्तमशेषं [5]सोऽवकर्ण्य जननीरथ नत्वा ।
तत्र कोसलसुतां तनुगात्रीं बाष्पगद्गदतरोक्ति बभाषे ॥ 89

रामधार्यमिह राज्यमशेषं देवि धर्तुमित(र)श्चतुरः कः ।
व्याललोकपतिना वहनीयां वाहसो वसुमतीं वहते किम् ॥ 90

ज्येष्ठमुज्ज्वलगरिष्ठगुणाढ्यं रामभद्रमभिषेचयिताऽहम् ।
सत्वरं समुपनीय भवत्याः शासनाज्जननि शर्म भज त्वम् ॥ 91

---

1. तुणीमय 2. अयोध्यां 3. त्वत्कथां 4. परितोषः 5. सोऽवकण्य ।

उन्नमय्य वदनं मम मातुर्दर्शनोत्थितमघं परिहर्तुम् ।
पश्य मां करुणयेति स जल्पन्नेव रात्रिमतिवाहयति स्म ॥ 92

उत्थितोऽयमुषसि प्रयतात्मा संविधाय समयोचितकृत्यम् ।
[1]मागधीतनुभुवा मणिजालैर्निर्मितं नृपसभं स विवेश ॥ 93

तत्र रत्नपरिकल्पितपीठे संविषण्णमवलोक्य विषण्णम् ।
शाधि राज्यमिति मन्त्रिपुरोधोभाषितस्स भणति स्म तदानीम् ॥ 94

रामपादयुगले रममाणं मामकं बत मनो विवरित्वा ।
.................................... . ............. ॥ 95

प्रीणिताखिलजनं पितृतुल्यं रामभद्रमचिरादुपनीय ।
[2]सादरं सदभिषेचनलक्ष्मीमातनोमि भवतां हृदि हर्षम् ॥ 96

भूष्यतां बहुविधं पुरमेतद्रच्यतां च सरणी रमणीया ।
संज्यतां सकलसैनिकवर्गस्तूर्णमित्यभिदधे भरतोऽसौ ॥ 97

मातृभिस्तिसृभिरेव समेतः शक्तितातसचिवैरनपेतः ।
आश्रितस्स भरतोऽन्यमुनीन्द्रैः सङ्गतस्स पुरतोऽथ जगाम ॥ 98

नैकया पृतनया वृतपार्श्वः केकयाधिपसुतातनयोऽसौ ।
भावुकस्थिति[3]बभाज स भारद्वाजमाश्रममुरुश्रमहारि ॥ 99

तत्र तं समभिवाद्य तथात्वे तेन मौनितिलकेन कृतार्घ्यः ।
भुक्तये नियमितो भरतोऽसौ सम्मदात्सबलवर्गमवात्सीत् ॥ 100

अस्य भोजनविधानमभीप्सोः मौनिलोकतिलकस्य महिम्ना ।
तत्र पावनतपोवनसीमन्येव सर्वजनताद्भुतवृत्ते ॥ 101

1. मागधीतनुभवा 2. आचरं 3. बभाजनभार ।

द्रोणहेमदलमाक्षिकचूताङ्कूरसत्फलमरन्दपरागम् ।
अन्नसूपघृतशाकमपूपक्षीरफाणितमभूत् परिणम्रम् ॥ 102

गन्धसारघनसारविशेषामल्लिकाकुसुममाल्यकुलानि ।
पूगनागलतिकादलभेदास्तत्र सन्निदधिरे स्वत एव ॥ 103

तत्समस्तमपि निस्तुलवस्तु प्रस्तुतं समनुभूय मुनीन्दोः ।
भाषिताद्भुतमन्त्रिपुरोधोबान्धवा मुमुदिरे भटवर्गैः ॥ 104

किन्नरीकलरवः कलकण्ठीगाननर्म गणिकानटनञ्च ।
[1]कर्णसौख्यदघनालिनिनादः सम्मदाय समजायत तेषाम् ॥ 105

पारिकांक्षिकथिते पथि गत्वा सोऽथ सैन्यसहितो भरतोऽग्रे ।
वप्रखेलनवितन्द्रकरीन्द्रं चित्रकूटशिखरीन्द्रमपश्यत् ॥ 106

कैकयेयकरिघोटककोटीपाटितक्षितिरजःपरिपाटी ।
पुष्पवद्विलनवत्यपि रावे भीतिभाजि विदधे सुरवर्त्म ॥ 107

तद्विमृश्य कथयाद्य ममेति प्रेष्य लक्ष्मणमवोचत रामः ।
पादपाग्रमधिरुह्य तदाऽस्मै सोऽप्युवाच भरतागमवार्ता(म्) ॥ 108

संप्रमृद्य स शरैःसमरेऽस्मान् रक्षितुं वसुमतीमसपत्नाम् ।
कोविदारपदकुञ्जरराजस्फूर्तिमेत्य भरतोऽयमुपैति ॥ 109

इत्थमुक्तवति तत्र सुमित्रानन्दने रघुपतिर्नयशाली ।
अभ्यधादहह लक्ष्मण रोषं मुञ्च संचितममुं चपलत्वात् ॥ 110

आत्मनीनवचनैरनुनीय क्षोणिरक्षणविधा [2]वभिषेक्तुम् ।
मागधीसुत ममानयनार्थं भक्तिमानुपगतो भरतोऽसौ ॥ 111

---

1. कर्णसौख्यरघुनालिनिनादः  2. अभिषिक्ते ।

रामलक्ष्मणमिथः कथनेऽस्मिन्नेव तत्र समुपेत्य विनीत्या ।
दूरतोऽथ भरतो दलशालामास्थितं रघुपतिं समनंसीत् ।। 112

तं तथानतमतिद्रुतमेत्योत्थाप्य वत्सलतया परिरभ्य ।
मौनिनोऽर्ककुलदेशिकमुख्यान् राम एष जननीश्च ननाम ।। 113

शक्तितातमुखसर्वमुनीन्द्रानुन्मिषद्विनयधीरुपवेश्य ।
कैकयेयमुपलाल्य रघूणामग्रणीः स्वयमुपाविशदग्रे ।। 114

शीततां श्रितमिवाम्बुजबन्धुं वासरे विलसमानमिवेन्दुम् ।
[1]भाष(मा)णमिव भर्मगिरीन्द्रं ते रघूत्तममुदात्त[2]मपश्यन् ।। 115

तत्र दाशरथिरेक्ष्य वसिष्ठं वामदेवमितरान् व्रतिनश्च ।
कैकयीसुतमनामयपृच्छामाचरंश्चिरमहर्षयदेतान् ।। 116

संघशः समुपयातवतां च किं प्रयोजनमिहालपतेति ।
राघवे वदति सत्यथ सर्वे ते प्रहृष्य बभणुर्भरताद्याः ।। 117

[3]तत्र न स्थितवति त्वयि धात्रीनाविकेन रहितेव महानौः ।
चण्डवातचलिता रघुवीर क्वापि न स्थितिकथां समुपैति ।। 118

अम्बुराशिरशनामभिषिक्तः सारसन्ततिनिशाधिप शाधि ।
आर्य कार्यमिदमेव परं नस्तत्कुरुष्व भरणाय जनानाम् ।। 119

भूरिशो ब्रुवति मौनिनि जाबाल्याह्वयेऽथ धरणीभरणार्थम् ।
भाषितेऽप्य विमुखं रघुवीरं प्रेक्ष्य साहसयुतो भरतोऽभूत् ।। 120

तेन साहसवता भरतेन प्रार्थितस्स भरणाय पृथिव्याः ।
पादुके प्रणतलोकशुभैकापादिके रघुपतिर्वितताार ।। 121

1. भाषणमिव 2. मदर्शन् 3. तत्रनः ।

आशु ते करयुगेन गृहीत्वा पश्यति स्म बहुधा हृदि बभ्रे ।
[1]न्यस्यतेऽधिनयनं निजमूर्धन्यादधात् स भरतश्चरितार्थः ।। 122

प्रेषितो रघुकुलप्रभुणा ते पादुके सहबलेन निवृत्त्य ।
नन्दितो बुधजनैरथ नन्दिग्रामसीम्नि भरतोऽभिषिषेच ।। 123

रामभद्रपद एव वसन्त्यौ सर्वदा निवसतोऽप्यधुना ते ।
रामभद्रपद एव तदेतद्युक्तमित्यकथयन्नथ पौराः ।। 124

हर्षतःऋतुभुजा हरिमुख्या स्पर्शनद्रुसुमवर्षमवर्षन् ।
अध्वनन् जलधराध्वनि भेर्यो नृत्यति स्म ततिरप्सरसाञ्च ।। 125

अभवन्न तदीयपादरक्षा पुररक्षाविधये वरं तदानीम् ।
भुवनत्रितयस्य पूर्णरक्षाविधयेऽभूदिति कोविदाः शशंसुः ।। 126

मनुकुलपतेःपादद्वन्द्वे महीं [2]निधदब्जभे
तदनुभरतो दान्तस्तद्दर्शनेन दिने दिने ।
पदसरसिजे तस्य प्रत्यग्दृशामपि दुर्लभे
प्रमदमभजत् ध्यायं ध्ययं प्रजाः परितोषयन् ।। 127

सूरिस्तव्यकुमारसम्भवमहाकाव्यप्रतिग्रन्थन
[3]प्रागल्भ्यप्रकटक्रियापद (तति)प्रख्यातवैदुष्यया ।
देव्योद्यन्मतिसख्यया मधुरवाण्यम्बाख्यया निर्मिते
श्रीरामायणसारनाम्नि दशमःसर्गोऽत्र काव्येऽभवत् ।। 128

इति श्रीरामायणसारकाव्यतिलके

दशमः सर्गः

1. न्यस्यताधिनयनं 2. निदधदब्जपे 3. प्रागल्भे प्रकटेश्रियापद...प्रख्यातवैदुष्यया ।

# श्रीरामायणसारकाव्यतिलके

## एकादशः सर्गः

अथ तत्र गिरौ रघूत्तमो भरतं भक्तिरतं मुहुः स्मरन् ।
वसुधाजनिलक्ष्मणान्वितो वसति स्म प्रतिलोकवर्णितः ।। 1

स कदाचन राक्षसत्रसत्कुलपत्युक्तमृषीन्द्रसंसदाम् ।
अनवस्थितिशंसि सादरं रघुवीरः सहलक्ष्मणोऽशृणोत् ।। 2

तदनु व्रतिनामधीश्वरे सति निर्गच्छति तत्र तापसे ।
महिजासहजान्वितस्ततो मनुसन्तत्यधि[1]भूरगादगात् ।। 3

पृथिवीतनयापतिः प्रयान् पथि पुण्यायतनं तपोवनम् ।
अतिपावन[2]मत्रिमौनिनः समुपेत्याजनि सत्कृतोऽमुना ।। 4

हरचापभिदादिमां कथामथ रामस्य निशम्य भूभुवः ।
अदसीयमुदे प्रसन्नधीरनसूयार्पयताङ्गरागकम् ।। 5

धरणीजनुषः स्तनद्वयी तदुपात्ताभिनवाङ्गरागभाक् ।
वनसीमनि धातुसंभृतं करिकुम्भं गिरिडिम्भमाक्षिपत् ।। 6

तदनन्तरमत्रिणा महामुनिना प्रेषित एष तोषितः ।
असिकार्मुकतूणबाणवान् प्रययौ पंक्तिरथिः स धीरधीः ।। 7

अथ कोललुलायजीवनं शरवर्णोघकषायजीवनम् ।
घटितद्विपगण्डकावनं दरदं प्राप स दण्डकावनम् ।। 8

---

1. भरगदगात्  2. मंत्रि ।

करिमण्डलखण्डनक्रमक्रमुकं [1]तीरवनाटभेदनम् ।
जनकर्णकठोरझंक्रिया[2]युतझिल्लीवृतवल्लिवेल्लितम् ॥ 9

महिषालिविषाणधर्षितद्रुमकीर्णप्रसवासवाप्लुतम् ।
क्रिटितल्लजभल्लुकच्छिदापटुभल्लोद्भटभिल्लवल्लभम् । 10

बहुलोग्रतमोमहागुहानिवसद्ग्राहसदेहसंकुलम् ।
[3]सुदुरीक्षतरक्षुधोरणी[4]नखसंक्षुण्णमृगास्रपंकिलम् ॥ 11

पिचुमन्द[5]फलाद(नस्पृहात् वि)विधध्वांक्षनिकायकांक्षितम् ।
कुजकोटरकूटरारटद्दृढगर्वान्धदिवान्धबन्धुरम् ॥ 12

बहुनिष्कुटगेह[6]नन्दित········रन्द्रार्जनभूर्जसं···········।
पवनप्रथमानपाटलीपनसाशोकपलाशपिप्पलम् ॥ 13

सरलासनसालसल्लकीजनिजम्बीरजपाजयान्वितम् ।
[7]तिनिशाम्रशिरीषतिन्त्रिणीकुटजश्लिष्टकुटन्नटस्फुटम् ॥ 14

रथिरोधकरे निजान्तरे प्रबलैर्ध्वान्त(वितानसं)चितैः ।
[8]ज(ननेत्रचया)न्ध्यदायिभिः भयदं भल्लुकलोकतल्लजैः ॥ 15

[9]त्वरमाणसकेलिसारसस्फुरितं[10]कैरवहारसूरितम् ।
ध्वनदन्यभृतान्वितं पुरः स्थितमाराम[11]मिवालिसङ्गतम् ॥ 16

[12]अनु(ताप)हरोऽद्रिराट्चरन्नविषाणः कलभाग्रणीर्मधुः ।
तनुमानिति तत्र राघवं निगदन्तो ददृशुर्वनेचराः ॥ 17

---

1. तीरवनादभेदनम् 2. युतझल्लो 3. सुदुरिक्ष 4. नभसंक्षुण्ण 5. पलाद... 6. संदित 7. तिनिशाम्रतिरीट 8. ज...चान्ध्यदामिभिः 9. त एघु माणकेलि-सादर 10. कैरविहार 11. निवालि 12. अन...हराद्रिराट् ।

तमवेक्ष्य धनुर्धरं महीतनयाप्तं सह देवसेनया ।
उपयान् गुह एकवक्त्रभागिति शाखास्वनटन् शिखावलाः ।। 18

विपिने सति याति राघवे विकृतस्तत्र विराधराक्षसः ।
अहरत्कनकस्य पुत्रिकामिव चोरो जनकस्य पुत्रिकाम् ।। 19

अपराधकृतं दुरासदं सविरोधं स विराधमाशरम् ।
असिना बिभिदे सलक्ष्मणः स्वरुणाशैलमि(व)स्वरीशिता ।। 20

असिनैवममुं विदार्य तौ स्वजयोक्ताय सुपर्वभोगिनाम् ।
सदने किमु राघवौ द्विधा न्यधिषातामचिरान्महाबिले ।। 21

शरभङ्गमभङ्गनिर्मलप्रतिभं गर्वविवर्जिताशयम् ।
अभिवाद्य ततोऽर्चितोऽमुना सहसम्भाष्य रघूद्वहो ययौ ।। 22

[1]स्वसुतीक्ष्णमतिं व्रतीश्वरं ससुतीक्ष्णं तमभीक्ष्णमादरात् ।
अखिलस्तुतधीरगस्त्यमप्यथ तद्भ्रातरमप्यवन्दत ।। 23

जटिनो घटजन्मनो गिरा जगृहे जम्भविभेदि कार्मुकम् ।
असिमप्यसमाक्षयाशुगौ शरधी[2]दाशरथिस्तथाऽऽदित ।। 24

वनसीम्नि वनेचरैस्समं वसतस्तत्र ककुत्स्थसन्ततेः ।
अधिपस्य समीपमागमन् व्यथिता रात्रिचरैर्व्रतीश्वराः ।। 25

रघुवीरमुदारविक्रमं विकृताकारविराधमाथिनम् ।
अभयं मुनयो[3]ययाचिरे मधुहन्तारमिवामृतान्धसः ।। 26

भरताग्रभवो दयावशाद्यदृषीणामभयं वितीर्णवान् ।
अभयार्पणकल्पनाभवद्भुवनानां न तदेतदेव किम् ।। 27

---

1. ससुतीक्ष्णमतिं 2. दाशरथीरधीदिव 3. यद्वचिरे ।

अखिलर्षिजनाभयार्पणाचणमैक्ष्वाकमुदीक्ष्य जानकी।
किमिदं बत वैरकारणं कृतमत्रेति तमभ्यभाषत ॥ 28

न्यगदीज्जगदीश एष तामिदमिक्ष्वाकुकुलोचितं व्रतम्।
विजयास्पदमेत्र मे भवेद्विजयाशंसि न किं द्विजावनम् ॥ 29

[1]उटजेषु ससाम्रपाटलीकुटजेषु क्रमशः सतां मतः।
[2]निवसन्मुनिसंसदां सदा विदधे शर्म रघूत्तमस्ततः ॥ 30

प्रकटीभवदग्रशाटिकास्थपुटीभूतहरित्पुटीमसौ।
कृतटीकनकीर[3]नादवत् द्युतटिं पञ्चवटीमटीकत ॥ 31

प्रविशन्नथ पर्णशालिकां प्रणयाल्लक्ष्मणनिर्मितां मताम्।
परिरम्भणपारितोषिकं प्रददौ तस्य स तत्र राघवः ॥ 32

प्रकटीकृतचिज्जटी रघुप्रवरः पञ्चवटीतले वसन्।
[4]महितोऽन्वकरोन्महर्षिभिर्बहुपान्मूलजुषो महेशितुः ॥ 33

पितृसख्यजुषं जटायुषं [5]चिरजूत्यायुषमेक्ष्य राघवः।
परिलालयति स्म तं बुधाः परिगृह्णन्ति हि पक्षपातिनम् ॥ 34

पलितंकरणः पयोरुहां परिरम्भं प्रथयन् विलासिनाम्।
वनजाप्तमयूखमान्द्यकृद्ववृते शैशिरवासरस्तदा ॥ 35

जलजातमुखाशिलीमुखाः समयेऽस्मिन् शिथिला मनोभुवः।
अहमेव जयेषुराद्य इत्यहसीत्कुन्दममन्दगन्धभाक् ॥ 36

---

1. उटजेषु नसाम्र 2. निवसन्मुदि संसदाः 3. नादवद्युतटिंपञ्चदटीं 4. महि-तोन्यकरो सहर्षिभिः 5. चिरजूतायुष।

कलितं समयेन दस्युना पथिकानां धृतिवित्तमोषणे ।
नवमोहनचूर्णमेव नो यदि किं लोध्ररजस्तदान्ध्यदम् ॥ 37

द्युमणिं हिमधूसरं हिमद्युतिमालोच्य दिने दिने सितम् ।
अतिखेदसमन्विता न किं स्वत····दान्य····न्नदृश्यताम् ॥ 38

परिरम्भणसौख्यमाचरन् सुदृढं मे स(खि)यत्र रात्रयः ।
इति कामिजने प्रशंसति प्रमदार्तिकन्वतिमेदुरा[1]बभुः ।। 39

समयेन कृता········र्धनां निजनाथस्य····क्ष्य····चत ।
·············हिमाश्रु विन्दतो सा···प्रापुरतीव दीनताम् ॥ 40

समये सति मानिनीजनः स्वशरीरद्युतिचौर्यधूर्वहम् ।
नितरां परिमृद्य कुङ्कुमं निदधे किं कुचदुर्गसीमनि ॥ 41

अगुरुश्वचन स्थितं तदा सुरभित्वं सुमुखीपरिग्रहात् ।
प्रतिपद्य गुरु[2]प्रथामगात् न तथा किं सुदृशां परिग्रहः ॥ 42

इह पद्मभृतो वयं पयो हृतपद्मेन हिमेन मेलनम् ।
[3]अतिनिम्नतयाऽतनोदितद्विरदाः स्प्रष्टुमिदं च नोद्यताः ॥ 43

करिणामपि[4]शीतधीकरां हरितस्तत्र[5]तुषारधूसराः ।
निजगाद निरीक्ष्य सोदरं निजपार्श्वोपगत्तं रघूद्वहः ।। 44

अतिशीतलमम्बु बिभ्रती शिशिरे लक्ष्मण गौतमीनदी ।
अवगाहकृतां दधात्यसौ जडिमानं हरते[6]व्यथोद्भवम् ॥ 45

---

1. गिरौ 2. प्रथामदात् 3. अधिनिम्न सयातनोदितिद्वरदा 4. शीत धीतरां
5. तुपारधूसरा 6. व्यथोदभतम् ।

इति लक्ष्मणमीरयन् रघुप्रवरस्तत्तटिनीपयस्ययम् ।
अखिलावयवान्निमज्ज्य तामधिकामातत जह्नुजन्मनः ।। 46

अथ शूर्पणखा नृखादिनी धरणीलेखमुखासुखावहा ।
विमलस्थिति रामलक्ष्मणौ विचरन्तौ विपिने[1]व्यलोकयत् ।। 47

किमु भानुविधू किमश्विनौ किमिमाविक्षुशरासमाधवौ ।
इति संस्तुवती निशम्य तौ मनसा विस्मयमश्नुते स्म सा ।। 48

उदितस्मरवेदना तयोरुभयोः पार्श्वमुपेयुषी मुहुः ।
अथ पुष्पितचूतयोर्गतागतकारिभ्रमरीव साऽभवत् ।। 49

असिनाऽकृत तामनासिकां रघुवीरस्य गिरा स लक्ष्मणः ।
[2]द्रुतमेत्य तदेव रक्षसामवदत्तत्र न[3]किन्वनासताम् ।। 50

विकृताकृति विग्रतां गता सहजातस्य खरस्य पादयोः ।
[4]प्रणिपत्य नृपात्मजासिदुस्सहकृत्यं सहसाऽभ्यधत्त सा ।। 51

स्वसुरार्तिमवेक्ष्य तत्क्षणं स्वसुरासह्यमहाविगर्हणः ।
सखरस्समदीपि कोपत सखरद्योत इवार्यमातपे ।। 52

असिचापधरः खरश्चतु[5]र्दशसाहस्रमहास्त्रिभिर्वृतः ।
अधिरूढरथस्सदूषण [6]त्रिशिराःक्लुप्तजगद्भयोऽभ्ययात् ।। 53

उपयान्तमुदीक्ष्य राघवस्तरसाऽग्रे तरसान्धसां गणम् ।
स्वयमेव समित्कुतूहली स सुमित्रासुतमभ्यभाषत ।। 54

शुभलक्षण शूर मैथिलीमभिगोप्तुं वचसा वसात्र मे ।
इति तं प्रणिरुध्य राघवः कवची खड्गधनुर्धरो ययौ ।। 55

---

1. त्यलोकयत् 2. रुषमेत्य 3. किन्वनासिकाम् 4. प्रणिपत्य नृपात्मयदुस्सह-कृत्यं 5. दंशसाहस्रमहास्त्रवैर्वृतः 6. त्रिशिराःक्लुप्तजगद्भया ।

धरणीचलनैक[1]दायिनी ध्वजिनी सा [2]रजनीचराग्रगा ।
पुरतोऽस्य चचार भूरिशः [3]स्वनती चापकृपाणधारिणी ।। 56

द्रुतमापततः क्रुधा तथा रजनीचारिभटान् रणोद्भटान् ।
मुमुदे समुदेक्ष्य राघवः क्षुधितो व्याघ्र इवाग्रतो मृगान् ।। 57

शितभीममुखैः शिलीमुखैर्निजघान प्रतिघान् निशाचरान् ।
विशरारुकरं विभिन्नदोर्विदलन्मूर्धं तदा रघूत्तमः ।। 58

तदवेक्ष्य सरोषभाषणं बिभिदे दूषणमाजिभीषणम् ।
कृषिदूषणमेष शक्तिमानिषुभिस्तारकमग्निभूरिव ।। 59

त्रिशिरस्समये कवाटिकाकठिनोरस्क[4]महस्करान्वयः ।
अथ भिन्नशिरस्कमातनोत्त्रिजगत्सम्मदयन्निवाशुगैः ।। 60

म(ति)शक्तिजुषं रुषा ततो मुखरं राक्षसशेखरं खरम् ।
अघराशिमिवाग्रतः स्थितं रघुराट् पत्त्रिभिराक्षिपत्त्रिभिः ।। 61

अमनाग्विशिखानमर्षतः किरतस्तस्य खरस्य मस्तकम् ।
इषुणाऽयमुपर्यनाटयत्त्रिदशानामिव दर्शयन्मुदे ।। 62

जलवाह इवानिवारितः खरधाम्नः प्रशमय्य गौरवम् ।
[5]हरिचापवहो रघूद्वहो [6]भरसन्तापधुरं जहार सः ।। 63

भुवमाप बुधोक्षितामरद्रुमपुष्पागतभृङ्गझंक्रिया ।
स्तुवतां दिवमाप राघवं व्रतिनां स्वस्तिवचस्तदा मुदा ।। 64

---

1. दानिनि 2. रजिनीचराग्रगा 3. स्वनता 4. अहस्करान्वयं 5. हरिचापवहा 6. भरसंतापघरं ।

उपयन्तमुदारमुज्ज्वलं जयल(क्ष्मीयुतमे)क्ष्य जानकी ।
[1]शरघूर्णधवाङ्गमण्डलीं (प्रणयायो)जनयाऽभ्यनन्दयत् ॥ 65

दमितासुहृदं विलोक्य तं [2]दमिनामात्मनि सौख्यदायिनम् ।
नितरां निमिराजनन्दना परितुष्टा परिषस्वजे पतिम् ॥ 66

रघुवीरहतान् रणे खरप्रमुखान् वीक्ष्य पलादिनो भयात् ।
प्रचुरश्वसितप्रकम्पनो लघु लंकां प्रययावकम्पनः ॥ 67

खरदूषणमुख्यरक्षसां स दशास्याय दशां निशाचरः ।
रचितां रघुवंशमौलिना जगतामद्भुतहेतुमभ्यधात् ॥ 68

अथ शूर्पणखाङ्गवैकृतं रघुभर्त्रा कृतमेक्ष्य रावणः ।
स रुषातिकषायितेक्षणो हविषाऽदीव्यत हव्यवाडिव ॥ 69

अवनीजनुषोऽभिरूपतामभितां शूर्पणखामुखोदिताम् ।
[3]अधिभूरवकर्ण्य रक्षसां हरणेऽस्या हृदयं न्यदात्तदा ॥ 70

स्वसहायमिदम्प्रयोजने हृदि मारीचविभावरीचरम् ।
प्रवितर्क्य पतिः पलान्धसां सहसा तस्य समीपमाप सः ॥ 71

हरणे धरणीतनूभुवो मम मारीच सहायतां भज ।
इति तेन ससान्त्वमीरितो व्यथितोऽभाषत ताटकासुतः ॥ 72

अहमेतमवैमि राघवं सुदुरीक्षः[4]स सुरासुरैरपि ।
[5]तदिषुप्रहतोज्झितः पुरा नियतेः पंक्तिमुख भ्रमं त्यज ॥ 73

---

1. रसघूर्ण 2. तमिनामात्मनि 3. अरिभूरवकर्ण्य 4. ससुरासुरैरपि
5. तदिषु प्रहतोज्झितं ।

इति तेन निवारितोऽप्यसौ शतधा तं स्ववशं विधाय सः।
अपहर्तुमियेष मैथिलीं विधिचेष्टां हि विलङ्घयेत कः॥ 74

तपनीयमयं तदाज्ञया कमनीयं मृगरूपमेयिवान्।
चरति स्म स ताटकासुतो जनताश्चर्यपदं तदाश्रमे॥ 75

[1]अचरत्क्वचिदाहरत्क्वचित् तृणमाशाः क्वचिदैक्षत त्रसः।
क्वचिदप्लवत[2]व्यलीयत [3]क्वचिदास्त क्वचिदप्ययं पुनः॥ 76

धरणीजनुषस्तनूलतासुषमां चोरयितुं भुवं गता।
अचिरांशुरसौ चलाचलाकृतिरास्ते यत इत्यतर्कयन्॥ 77

स पुराधृतकर्बुराकृतिर्जगतां मोहकरो व्यमोहयत्।
अधुनाऽदृतकर्बुराकृति क्षितिजामानसमद्भुतं न तत्॥ 78

तमवेक्ष्य चरन्तमन्तिके निमिकन्या निजगाद राघवम्।
अमुमाहर सन्निधौ सदा स यदि स्यात्कुतुकं भवेदिति॥ 79

अवलोक्य हिरण्मयं मृगं निमिपुत्र्याश्च निशम्य भाषितम्।
[4]भरताग्रभवोऽथ भक्तितो भजमानं भणति स्म लक्ष्मणम्॥ 80

[5]मृग एष मृषाऽमिषाशनः परमस्याः प्रमुदे हराम्यहम्।
इह लक्ष्मण तिष्ठ यत्नतः कुटिलाः कूटचरा निशाचराः॥ 81

हरिणोऽहरदेष मैथिलीमन इत्येव महाधनुर्धरः।
अथ हर्तुमगाद्रघूद्वहः सहते को भुवि पश्यतोहरम्॥ 82

---

1. अाचरत् 2. स्यलीयत 3. न्वबिदास्त 4. भरताग्रभुवोऽथ 5. मुगयेषमृषा मिषाशनः।

उपयान्तमुरुक्रुधा रघुप्रवरं सैष पलायनच्छलात् ।
अतिदूरमुदाचकर्ष तं बलवान् काम इवार्थिनं द्विजम् ।। 83

शतकोटिनिभेन शम्बरं निजघानैकशरेण राघवः ।
कामितेव रतेस्स मायिनं तमसावप्यसमाशुगो न किम् ।। 84

तदिषुप्रहतस्स ताटकातनयस्त्यक्तमृगाकृतिस्ततः ।
बत लक्ष्मण हन्त मैथिलीत्यलमुत्क्रुश्य पपात भूतले ।। 85

अवकर्ण्य [1]तदुक्तिमार्तिदां परुषोक्तीः क्षितिजा वितन्वती ।
प्रयतं नियतं च लक्ष्मणं प्रहिणोति स्म समीपमीशितुः ।। 86

समयं तमवेक्ष्य रावणः क्षितिपुत्रीमपहर्तुमुद्यतः ।
[2]मलिनप्रकृतिर्मतिं तदा विदधे मस्करिवेष[3]धारणे ।। 87

अरुणं धृतमम्बरं तदा यतिनस्तस्य कषायिताम्बरम् ।
अनुकूलमभून्निजप्रभोरनुरक्तस्य गतिर्हि तादृशी ।। 88

स उदात्तमुखस्वरैः श्रुतीर्विवरन्नेव निशाचराग्रणीः ।
यतिमूर्तिमुपेत्य सत्वरं क्षितिकन्यान्तिकदेशमासदत् ।। 89

निजरूपमथ प्रदर्शयन् [4]निकषा(ऽऽगत्य निमीशजां प)राम् ।
अहरन्मुकुलद्दृगुत्पलां स्तनयित्नु (दिनवल्ल)भामि(व) ।। 90

रघुपुङ्गव राम राघवे[5]त्यमिताक्रोशमथो महीभुवः ।
अवकर्ण्य जटायुरुच्चकैरुदितं क्रन्दितमुत्पपात खम् ।। 91

---

1. तदुक्ति मूर्तिदः 2. मलिनप्रकृतिः यतिं तदा 3. धारिणे 4. निकषातं
5. त्यमिताक्रोशभुवो ।

परिखण्डितपंक्तिकन्धरध्वजवर्मेष्वसनोष्ण[1]वारणम् ।
[2]तदसिक्षतपक्षतिः क्षितौ न्यपतत्क्रुद्ध इवैष गृध्रराट् ।। 92

प्रथनावसरे तयोरसौ वसनाग्रेण वसुन्धरासुता ।
परिबध्य परार्घ्यभूषणान्यवनीभृत्तटसीम्न्यपातयत् ।। 93

अपहृत्य तदा हठादमूमथ लङ्कां प्रविशन् दशाननः ।
निजवीक्षणनिःस्पृहाशयां न्यधिताशोकवनेऽवनेः सुताम् ।। 94

पथि लक्ष्मणमेक्ष्य राघवो व्यथितात्मा तदनूपयन्नयम् ।
अमहीसुतमैक्षतोटजं रहितं दीपिकयेव रात्रिषु ।। 95

अनवेक्ष्य स तत्र मैथिलीं करवित्रस्त[3]मणिर्वणिग्यथा ।
कमलाप्तकुलाधिपस्तथा कलिलात्मा विललाप खेदतः ।। 96

ललितैकनिधे लतागृहात् द्रुतमागच्छ कुतो [4]विलम्बसे ।
मम वेत्सि मनः परं न किं जनकस्यापि सुता चिदम्बुदे ।। 97

महिजापदवीं महीभुवो [5]वदतातिव्यथितात्मनो मम ।
विवरीतुमयं समर्चितं समयो वः सहजत्व [6]सौहृदम् ।। 98

कलकण्ठ भवान् कुहूरुतेरधिकर्ताऽ[7]प्यवनीरुहाग्रगः ।
अकरोन्न कुहूरुतं तदा मधुमत्तस्य गतिर्हि तादृशी ।। 99

सरणिं धरणीतनूभुवः शुक नो शंससि चेत्कदा नु वा ।
महिता भवितोक्तिमाधुरी किमु रक्तिस्तव पक्षपातिता ।। 100

---

1. दारणम् 2. रदसिक्षत पक्षविः 3. मणिवणिग्यथा 4. विलम्भसे 5. वदता-तुव्यथि 6. सौहृतम् 7. अवनीरुहाग्रगा ।

शनकैः कलहंस[1]शंमतच्छुभवार्तां सुखमेत्य तावता ।
निरपायरसोर्मिर्वर्मिते नियतं त्वां[2]रमयामि मानसे ॥ 101

बद[3] निम्नतया रसातलं भुवमोघेन महोर्मिभिर्दिवम् ।
अवगाह्य तदीयपद्धतिं सरसा गौतमि साम्प्रतं भव ॥ 102

अवनीभृदिलाभुवःस्थितिं वद तस्यां त्वमतीव वत्सलः ।
तव गह्वरदर्शनात्तथाप्ययते सम्प्रति लोलतां मनः ॥ 103

भ्रमरान् भ्रमतो हरिन्मुखे दधतोऽप्यविदितं न किञ्चन ।
सहकार तव प्रदर्शयन् सहकारो भव मैथिलीपथम् ॥ 104

अभिधाय वधूकथां कुरु प्रियकाख्यां प्रियकाद्य सर्थिकाम् ।
अपि पञ्चमुख त्वमादरान्मुखविस्तार फलं प्रदर्शय ॥ 105

दृशि [4]विस्मितमङ्घ्रिषु त्वरा भवतामस्ति मृगा विचार्यताम् ।
पदवी [5]पृथिवीजनेरिति व्यलपत् [6]खिन्नतमो रघूद्वहः ॥ 106

इति वादिनि मेदिनीसुताहृदयेशे [7]समुदस्तकन्धरः ।
हरितं हरिदश्वजन्मनो हरिणः [8]सोऽवगतैरदर्शयत् ॥ 107

सहजेन सहैव तां दिशं पथि गत्वा पतितं जटायुषम् ।
पथि वीक्ष्य ततो रघूद्वहः श्रुतवान् [9]पंक्तिमुखस्य दुर्नयम् ॥ 108

तमुदन्तमशेषमप्यदोवदनात् [10]सत्यमवेत्य राघवः ।
तदनु त्रिदिव प्रहित्य तं करसंस्पर्शवशादगात्ततः ॥ 109

---

1. शंसकः 2. रमयाणि 3. निश्नुतया 4. विस्मृत 5. पृथिवीजनैरिति
6. क्लिन्नतमो 7. समुदस्तकन्धरा 8. सावगतैरदर्शयन् 9. पंक्तिरथस्य
10. सत्यमशेत्य ।

अथ वर्त्मनि राघवःप्रयान् वपुषा मेघसखीमयोमुखीम् ।
अतनिष्ट करासिनासिना परुषत्वे पविना विनासिकाम् ।। 110

तदनन्तरमात्तकार्मुकौ कृतसीतामृगणौ रघूद्वहौ ।
तमसो जननीं भयस्थितेरवनीं क्रौञ्चवनीमवापतुः ।। 111

निरवर्णयतां नृपात्मजौ [1]निकृतन्तौ विकृतं महासुरम् ।
अकबन्धमिवाग्रतःस्थितं वपुषा तत्र [2]कबन्धमान्ध्यदम् ।। 112

निबबन्ध कबन्धदानवः स गृहीत्वा सुदृढं रघूत्तमौ ।
निजदोर्युगलेन तौ च तद्भुजदण्डावसिना न्यकृन्तताम् ।। 113

भुजनिर्मथनेन बोधवत्यथ तस्मिन् भुवि कौ युवामिति ।
परिपृच्छति लक्ष्मणोऽब्रवीत् रघुवीरस्य कथां सविस्तरम् ।। 114

निजशापकथामुपागतामसुरः स्थूलशिरस्तपस्विनः ।
अमरेन्द्रकृतात्मशिक्षणं न्यगदीत् सोऽप्यखिलं [3]तयोस्तदा ।। 115

असुरालपनादमुं बिले न्यदधातां (सहसोप)लाकुले ।
[4]तदनु द्रुतमुत्पपात खं धृतदिव्याकृतिरप्ययं तदा ।। 116

क्षितिभूस्थितिबोधनाय तत्परिपृष्टः स्मृतिमान् पुरैव सः ।
तदुदन्तमवैति तत्त्वतो भुवि सुग्रीव इति न्यवेदयत् ।। 117

अधितिष्ठति ऋश्यमूकभूधरमृश्यस्थगितं कपीश्वरः ।
सचिवैस्स चतुर्भिराश्रवैः सह पम्पासरसीतटान्तिके ।। 118

वलवैरिसुतेन वालिना बहुकालं बलिना प्रपीडितः ।
[5]महिभूमृगणासहायतां तनुयान् संत्यजतं मनोव्यथाम् ।। 119

---

1. निकृतन्ता विकृतं 2. कबन्धमान्ध्यदम् 3. तयोस्सदा 4. तव···द्रुत 5. महीभू ।

तपसा [1]श्रमणीमणीयसीं शबरीं सान्द्रदयास्पृशा दृशा ।
अवलोकयतं युवामिति प्रणिगद्याथ दनुस्तिरोदधे ।। 120

परितोषभरान्वितौ रघुप्रवरावाशु ततः प्रयाय तौ ।
[2]अचिरेण समाधिनिर्मलां शबरीं धर्मयुतामपश्यताम् ।। 121

विधिवत्परिपूजितस्तया पतिरर्घ्यादिभिरर्कसन्ततेः ।
सकलं च फलं समर्पितं परिजग्राह सहानुजेन सः ।। 122

शबरीकथिताः सनातनी[3]र्मुनिगाथा मधुरा मुहुर्मुहुः ।
तरुकोटिगतास्तपस्विनां वसतां तत्र तपःप्रभावतः ।। 123

धरणीरुहधोरणीरपि प्रसवान् म्लानिविवर्जितान् [4]सितान् ।
अवलोक्य वहन्नथाद्भुतं प्रययौ वाजिरथी [5]सुधीनुतः ।। 124

श्रेयःप्रापणसूचकैः सुशकुनैः श्रीरामचन्द्रो मन
स्यानन्दन् सहलक्ष्मणेन पुरतः [6]संलक्ष्यमाणं तदा ।
छायोच्छ्रायपदं ददर्श कदलीचाम्पेयजंबूजपा
लम्पाकार्जुनसर्जकाम्रभवनं पंपावनं पावनम् ।। 125

प्रौढश्रीरघुनाथनायककृतस्वर्णाभिषेकश्रिया
देव्योद्यन्मतिसख्यया मधुरवाण्यंबाख्यया निर्मिते ।
श्रीरामायणसारनामनि महाकाव्येऽतिभव्ये सुधी
वर्गस्तोत्रविशेषधाम्नि कथितः सर्गस्तथैकादशः ।। 126

इति श्रीरामायणसारकाव्यतिलके

एकादशः सर्गः

---

1. श्रमणीमणीयसी 2. अचिरेन 3. मुनिकाषायवदिर्मुहुर्मुहुः 4. शिताः 5. रधीनुत
6. संलक्षमाणं ।

# श्रीरामायणसारकाव्यतिलके

## द्वादशः सर्गः

शम्पामम्भोजातरागादपूर्वां सम्पाद्याथ प्रेक्षकानूर्मिकाणाम् ।
कम्पाद्वारं वारमाकारयन्तं पम्पाख्यातं प्राप रामस्तटाकम् ॥ 1

यत्रायासीदात्ममित्रान्वयस्य स्वामी रामः स्वैरमित्यम्बुजिन्यः ।
पश्यन्त्यस्तं पद्मनेत्रैः प्रफुल्लैर्माध्वीधारानन्द[1]बाष्पान्व्यमुञ्चन् ॥ 2

शैवालश्रीशैलजां प्राप्य पार्श्वे डिण्डीरौघे भाति खण्डेन्दुचूडे ।
सानन्दं तं यत्र संसेव्य हंसाः श्रुत्यायत्तैस्सुष्टुवुः शब्दभेदैः ॥ 3

केतुत्वेन स्वादधानस्य भर्तुः भेत्तुश्चापं रामभद्रो बिभेद ।
[2]इत्यौत्सुक्यात् किं झषा निर्निमेषा वल्गन्ति स्म प्रेक्षणे तस्य यस्मिन् । 4

कल्हारोद्यद्रेणुशोणा झषाणां वालाघातादुत्पतन्तः पतन्तः ।
कल्लोलौघा यत्र कौसुम्भशाटीखण्डा जाता राजहंसोपकण्ठे ॥ 5

धन्वान्वीतं लक्ष्मणेनानपेतं रामं जम्भारातिचापाभिरामम् ।
मत्वा विद्युन्माननीयं पयोदं दूरे दूरे दुद्रुवुर्यत्र हंसाः । 6

नालायष्टिं बिभ्रदावर्तचक्रे न्यस्याब्जोद्यत्पांसुमृत्स्नां रसार्द्राम् ।
कारं कारं न्यक्षिपत् कोकडिम्भान् कुम्भान् यः किंन्वातपे कुम्भकारः ॥ 7

ध्वन्युद्भूतोन्मेषसाहित्यमुद्रां (सं) [3]तन्वद्भ्यो यन्निदाने कविभ्यः ।
[4]राज्ञा येन श्वेतपद्मा वितीर्णाः कूजद्भृङ्गा जैत्रशङ्खा इवासन् ॥ 8

---

1. बाष्पान् विमुञ्चन् 2. इत्यौत्सुक्यात् 3. तन्वद्भ्यो यन्निदाने 4. राज्ञो येन ।

[1]यस्मिन्नम्भश्शम्भुमूर्तिः स्वयञ्च[2]श्वेताब्जोद्यत्श्वेतधूलीविभूतिम् ।
धृत्वा वल्गद्भृङ्गरुद्राक्षदाम व्यालोलोर्मिव्यालभूषां किमादात् ॥ 9

माध्वीधाराराजिराजीवराजीरङ्गद्भृङ्गीसङ्गिसङ्गीतभङ्गिम् ।
यल्लक्ष्मीराकर्ण्य हर्षान्नु तीर्यत्फेनश्रेणीकञ्चु [की साऽभ्यनन्दत्]॥ 10

आराद्दृष्ट्वा हंसकारण्डवानामारा (वैस्तैः) स्वं किलाकारयन्तम् ।
निर्विण्णात्मा सैष नेता रघूणां प्रत्यासन्नं लक्ष्मणं प्रत्यभाणीत् ॥ 11

सौमित्रेऽस्मिन् पश्य शैवालवल्लीसम्बद्धाऽऽस्ते श्रेणिरिन्दीवराणाम् ।
.......................................................सं गं प्रा................... ॥ 12

प्रेक्षानन्द[3]ल्लक्ष्मणा लक्ष्मणास्मिन् भान्त्युद्ग्रीवाः सारसाः सारसाप्ताः ।
यान्त्यूर्मिश्रीहंसका हंसका नो[4]चिन्तामेते मानसे मानसेषु ॥ 13

प्रादुर्भूतः पद्ममध्यात्समीरो भस्त्रीगर्भादत्र निर्यन्निवासौ ।
भूमीपुत्रीभूरिविश्लेषवह्निं भूयो भूयो दीप्यमानं विधत्ते ॥ 14

हन्ताद्याक्ष्णोरान्ध्यमापा(द)यन्तां भ्रान्ता भृङ्गा नित्यमालिन्यभाजः ।
ईक्षामात्रादत्र शुद्धाब्जरेखाः कुर्वन्त्येतत् किं नु सोदर्य कुर्मः ॥ 15

तस्मिन् भृङ्गीमीननालीरुकोकद्वन्द्वालोकात् भूमिकन्याप्रतीकान् ।
स्मारं स्मारं जातदीनानुलापं सौमित्रिस्तं सान्त्वयामास रामम् ॥ 16

भूयो भूयः[5]सान्त्व्यमानस्सुमित्रापुत्रेणासौ पूषवंशाग्रयायी ।
तीरे तस्य[6]श्रीफलाशोकचूतद्राक्षाप्लक्षप्रेक्षणीये व्यवात्सीत् ॥ 17

---

1. यस्मिन्नञ्वशम्भु 2. श्वेताब्जोदीतश्वेत 3. ल्लक्षणालक्षणास्मिन्
4. चिन्तामेके 5. सात्व्यमानः 5. श्रीफलामात्रचूत ।

युक्तोऽमात्यैर्वालिभीत्या चतुर्भिः सुग्रीवोऽद्रौ तस्थिवान् ऋश्यमूके ।
तत्रासीनौ धन्विनौ तौ तदेक्ष्य जाताशङ्कः प्राहिणोदाञ्जनेयम् ॥ 18

सुग्रीवेण प्रेषितः सूक्ष्मदर्शी तत्रायातो वर्णितावर्णितात्मा ।
छन्दश्शास्त्राभ्याससामर्थ्यसीमा धीमान् सोदाहार्यधामा हनूमान् ॥ 19

भक्त्या नत्वा [1]सोऽब्रवीद्राघवौ तौ सुग्रीवस्य स्निग्धमन्त्री हनूमान् ।
नाम्ना वायोर्नन्दनो वानरोऽहं सम्प्राप्तोऽत्रायातवान् [2]वर्णिवेषः ॥ 20

तेजोधन्यौ धन्विनौ दिव्यमूर्ती व्यूढोरस्कौ वारिजातायताक्षौ ।
कम्बुग्रीवौ कौ युवानौ युवामित्येतत् ज्ञातुं पूषजः [3]प्रैषयन्माम् ॥ 21

राज्यापेतो वालिना नीतभार्यः [4]तिष्ठन् भूभृत्कूटकोटीष्वटव्याम् ।
सुग्रीवोऽसौ सूर्यसूनुर्युवाभ्यां साकं कर्तुं सख्यमिच्छत्यवश्यम् ॥ 22

इत्युक्त्वाऽरात्तिष्ठतः स्तोत्रभेदान् श्रुत्वा रामस्तस्य सौमित्रिमूचे ।
वेदाध्येता शास्त्रराद्धान्तबोद्धा क्वाप्यद्यासौ नापशब्दं प्रयुंक्ते ॥ 23

एवं रामो लक्ष्मणं प्रत्युदीर्य व्याचष्टैतं प्रश्रितं वायुपुत्रम् ।
चेतस्येव स्थापयित्वा दनूक्तिं सुग्रीवं तं [5]प्राप्तुमागामिहेति ॥ 24

[6]एतादृक्षश्चेदमात्यः प्रभोः श्रीः स्यादेवेत्याशंसता राघवेण ।
प्रेमावेशात्प्रेरितो मागधेयः स्वं वृत्तान्तं वक्तुमारब्ध सर्वम् ॥ 25

आसीत् पंक्तिस्यन्दनस्तत्सुतोऽसौ ज्येष्ठो रामोऽस्यानुजोऽहं गुरूक्त्या ।
आवां वन्यामेत्य सुग्रीवमाप्तुं प्राप्तौ सीतान्वेषणार्थं दनूक्तेः ॥ 26

---

1. सोब्रवीद्राम कौ वौ 2. वर्णिवेषम्. 3. प्रेषयन्माम्. 4. कुर्वन्. 5. प्रापमागामिहीति. 6. एतदक्ष ।

तद्वाक्येनामोदमानो हनूमानासीत्तस्य स्कन्धपीठाधिरूढौ ।
सीतानेता लक्ष्मणश्च प्रहृष्टौ भानोस्सूनोरन्तिकं प्रत्ययाताम् ॥ 27

एवं रामः सानुजस्तत्र गत्वा विश्वासोक्त्या गन्धवाहात्मजस्य ।
सुग्रीवेणागच्छता कार्यकांक्षी सख्यं वह्निस्साक्षिकं सैष चक्रे ॥ 28

सुग्रीवस्तत्सौहृदस्य द्रढिम्ने गाढं कौशेयाग्रबद्धानशेषान् ।
भूमीपुत्रीरत्नभूषाविशेषान् रामायास्मै दर्शयामास राज्ञे ॥ 29

अङ्गासङ्गाद्विश्रकाञ्चीसुतायाः पूर्वं ··· ··· ··· ···यातान् ।
भूयोभूयस्तद्विभूषावलोकात् [1]तापं तं तं रामभद्रः प्रपेदे ॥ 30

एतौ राज्यभ्रंशराज्यापहारव्यासङ्गाद्यामात्मवार्तां समस्ताम् ।
अन्योन्यं व्याचख्यतुर्गाढसख्यौ त्यक्त्वा धैर्यं (दुःखयुक्तावभूताम्) ॥ 31

बाहासारं [2]ज्ञातुकामोऽथ (भानोः पु)[3]त्रोऽवादीत् [4]पूर्वजं लक्ष्मणस्य ।
ज्येष्ठो भ्राता वालिनामा ममास्ते किष्किन्धायां कीशसन्ताननेता ॥ 32

संग्रामायाकारयद्वालिनं तं
धूर्तो दृप्तो दुन्दुभेरात्मजातः ।
मायावी तं सोऽपि भित्वा बिलाग्रात्
[5]निष्क्रान्तो मां सान्त्वयन्तं निरासे ॥ 33

आगच्छन्तं दुन्दुभिं पूर्ववैरात् भित्त्वा वाली शौर्यशाली कदाचित् ।
आचिक्षेप क्रोधवानायताभ्यामार्द्रं दोर्भ्यां स्फीतमेतस्य कायम् ॥ 34

दूरव्याप्ता दुन्दुभेरस्रलेशा [6]वन्यां पेतुर्द्राङ्मतङ्गव्रतीन्दोः ।
कोपाटोपात् घूर्णमाणेक्षणोऽसौ शान्तिं त्यक्त्वा शक्रपुत्रं शशाप ॥ 35

1. तावं तं तं 2. ज्ञातुकामाथ... 3. त्रवादीत् 4. पूर्वजो । 5. निष्क्रान्तं
6. वस्यां ।

धृत्वा प्राणानत्र वर्ते ततोऽहं शाखाभीलास्सप्त साला इमेऽग्रे ।
एतेष्वेकं निर्मिमीते स वाली निस्तन्द्रो निष्पत्रमात्मौजसेति ।। 36

रामः श्रुत्वा तद्वचः प्रत्ययार्थं चिक्षेपोग्रं दुन्दुभेःकायमङ्घ्रेः ।
अङ्गुष्ठेन स्वाभिदैतन्निरासं दात् किंवा दुंभिर्ष्योद्धचुनादिते? ।। 37

नालीकाप्त [1]स्फूर्तिमान् सप्तसालीं नालीकेनैकेन चिच्छेद रामः ।
सन्तुष्टाष्टाशाधिभूराजधानीसालस्थैर्यव्यञ्जकं तद्बभूव ।। 38

कृत्वा रामः कृत्यमत्यद्भुतं तत् सुग्रीवं तं हर्षवन्तं बभाषे ।
स्वाराट्पुत्रं सायकाग्रेण भित्त्वा तद्राज्ये त्वां स्थापयिष्याम्यवश्यम् ।। 39

इक्ष्वाकूणामीशमेवं [2]ब्रुवाणं भक्त्या युक्तो भानुमत्सूनुरूचे ।
सीताचोरं मार्गयित्वा दशास्यं साहाय्यं ते कल्पयिष्ये समीके ।। 40

इत्युक्त्वाऽसौ राघवः प्रीतचेताः भास्वत्पुत्रं प्रत्यभाणीत्तदानीम् ।
त्वं युद्धायाकारयेन्द्रात्मजातं तत्रायातं तं निहन्मीषुणेति ।। 41

सन्नद्धोऽसौ वानरेन्द्रोऽथ गत्वा वृत्राराातेः पुत्रमाह्वास्त नर्दन् ।
किष्किन्धाया निर्ययौ सोऽपि तौ द्वौ बद्धस्पर्धौ चक्रतुर्बाहुयुद्धम् ।। 42

बाधां लब्ध्वा वालिनो बाहुघातैः पार्श्वायातं पद्मिनीमित्रपुत्रम् ।
रामोऽभाणीद्वामहं मूर्त्यभेदात् तूष्णीमासं मा कृथास्तद्वचथां त्वम् ।। 43

इत्युक्त्वाऽसौ प्राहिणोच्चिचह्नभूतां कण्ठे कृत्वा मालिकां गाजपुष्पीम् ।
सुग्रीवं तं सोऽपि गत्वेन्द्रसूनुं गर्जन् भूयो व्याह्वतायोधनाय । 44

तेनाहूतो भानुजातेन वाली वारं वारं तारया वारितोऽपि ।
युद्धाय द्रागभ्ययात् निर्भयात्मा शत्रुक्ष्वेलं [3]जिष्णुजः किं सहेत ।। 45

---

1. स्फूर्तिमाः 2. ब्रुवाण 3. जिष्णु सूनुः सहेत् किम् ।

आयातस्यैतस्य मुष्टिप्रहारैर्भास्वत्सूनुं भग्नमग्रे विलोक्य ।
एकेनासौ सायकेनाशु रामः शौर्योत्सिक्तं शक्रसूनुं जघान ।। 46

श्रीरामस्य क्रूरनाराचविद्धः क्रुद्धो वाली तं जगादातिखेदात् ।
बाल्येनैवं राम हा मामकार्षीर्नो विज्ञाता नो [1]विनीतो न नेता ।। 47

इत्याभाष्य ज्ञातरामप्रभावः पश्चादाख्यन्मोहमुन्मुच्य वाली ।
जानामि त्वां जानकीनाथ साक्षादम्भोजाक्षं भूतलेऽत्रावतीर्णम् ।। 48

अज्ञानाद्वा चापलाद्वा यदुक्तं तत्क्षन्तव्यं स्थापय त्वं कपीनाम् ।
साम्राज्येऽस्मिन् राम सुग्रीवमेतं मत्पुत्रञ्चाप्यङ्गदं यौवराज्ये ।। 49

आहूयाथो शक्रभूरर्कपुत्रं स्वाराड्दत्तं स्वर्णनालीकदाम ।
आसज्यैतत् [2]कण्ठसीम्न्येतदीये हस्ते पुत्रं न्यस्यति स्माङ्गदं तम् ।। 50

रक्षोनीतां विष्वगन्विष्य सीतां साह्यं कृत्वा साम्पराये रघूणाम् ।
पत्युश्चित्तं प्रीणयेत्थं गदित्वा शान्तो जातः शक्रजातस्तदानीम् ।। 51

तद्वृत्तान्ताकर्णनेनोपयातां तारामारात्तारतारं विषादात् ।
आक्रन्दन्तीं गन्धवाहात्मजातः सान्त्वालापैराश्वसैषीन्मनीषी ।। 52

सुग्रीवस्तत्कालयोग्यानि कृत्यान्यस्योदश्रुः कारयित्वाङ्गदेन ।
लज्जा [3]शोकाश्चर्यपर्याकुलात्मा रामाभ्यर्णं तेन साकं जगाम ।। 53

एतं पाथोजात्तजातं तदानीं रामस्वामिन् राजकस्तुत्यकीर्ते ।
कृत्वा भक्तं [4]कीशराज्याभिषिक्तं पाहीत्यूचे प्रश्रयादाञ्जनेयः ।। 54

---

1. विनीता नोननेता 2. कण्ठ सीम्ने तदीये 3. शोकाश्चयपर्याकुलात्म।
4. कीशराज्याभिषेकं ।

आकर्ण्यैतज्जानकीजानिरग्रे वृद्धामात्यान् वीक्ष्य तानाचचक्षे ।
तादृग्राज्ये वालिनः स्थापयध्वं पूष्णः पुत्रं यौवराज्येऽङ्गदञ्च ॥ 55

अद्यायाति प्रावृडर्हा न यात्रा तावत्कालं माल्यवत्यद्रिवर्ये ।
अत्रैवासे मित्रपुत्रेण युक्ता क्षिप्रं यातेत्यब्रवीद्रामभद्रः ॥ 56

अस्यादेशादब्जिनीशात्मजं ते किष्किन्धायां कीशराज्येऽभिषिक्तम् ।
निस्साणानां निस्वने जृम्भमाणे प्रेम्णाऽकुर्वन् यौवराज्येऽङ्गदञ्च ॥ 57

सुत्रामेत्र प्राप्तवान् [1]सौवराज्यं सुग्रीवोऽसौ स्वानमात्यानशेषान् ।
जातानन्दो जाम्बवन्नीलमुख्यान् सान्त्वालापैर्लालयित्वा चकाशे ॥ 58

सुग्रीवाभीषेककल्याणवार्तां श्रुत्वा हृष्टः सूर्यवंशावतंसः ।
सोदर्याप्तो माल्यवत्कन्दरायां वासं चक्रे वासवौजास्तदानीम् ॥ 59

नालीकानां नास्तिकः स्वस्तिकारी नागेन्द्राणां नर्तकः केकियूनाम् ।
[2]कालो नन्दत्कन्दलीतुन्दिलश्रीः कर्ता हर्षं कर्षकाणामथाभूत् ॥ 60

जीमूतानां सिन्धुराणां नभोच्छा [3]क्रीडाभाजां कीर्यमाणाः कराग्रैः ।
[4]विष्वग्व्याप्ता एव माणिक्य[5]मुक्ताकाराः स्वाराङ्गोपत्वर्षोत्पलौघाः ॥ 61

आस्वाद्येराममम्बुराशेर्बलाका [6]मिथ्याहासा स्रस्तवासोत्तरीया ।
विद्युन्नेत्रं घूर्णयन्ती रटन्ती बभ्रामाभ्रश्रेणिरभ्रप्रघाणे ॥ 62

[7]नृत्तैकार्हे नीलकण्ठस्य सद्यो व्योमाभोगे कालिकायां [8]नटन्त्याम् ।
वेगाल्लक्ष्यालक्ष्यतत्कुण्डलाञ्च [9]द्रत्नाभेवादिद्युते वैद्युतश्रीः ॥ 63

---

1. सावराज्यं 2. कालनन्दत्कन्दलो 3. क्रीडभाजां 4. विष्वग्व्याप्तायेव
5. मुक्ताखाराः 6. मिद्याहासा स्रस्तवांसोत्तरीयाम् 7. नृत्तैकार्हं 8. नटन्त्या
9. द्रत्नाभेवद्युतद्वैद्युतश्रीः ।

पूर्वंद्वेषान्नाक्रमाक्रम्य भूभृत्पाथोदस्सन् पाकशत्रुं विधूय ।
चापं,तस्य ह्लादिनीं चाप्यगृह्णात् जीमूताख्या तस्य नोचेत्कथं स्यात् ।।64

स्वर्णस्तोमानात्म[1]गुप्तान् करैः स्वैर्हंसं [2]रात्र्यामाहरन्तं पयोदः ।
आच्छाद्यैत[3]न्मित्रमब्जं निरस्यन् तत्संज्ञाकान् किं नु हंसान् निरासे ।। 65

[4]मुञ्चत्यम्भोवाहवीरेऽनलास्त्रं शम्पारूपं सम्भ्रमेणायुतेषु ।
विष्वक्कीर्णा विस्फुलिङ्गा इवोर्व्यां [5]स्त्रर्वास्तव्यस्वामिगोपान्यपप्तन् ।। 66

दूरादेवाहूय गर्जापदेशादम्भोलेशा [6]नर्पयत्यम्बुवाहे ।
सौहित्यं तैश्चतकाः प्रापुरन्तः [7]सन्तोषायाहूय दानं न किं वा ।। 67

नीरन्ध्राणां नीरदानां द्रढीयः संघर्षेण स्रंसमाना हिमांशोः ।
खण्डा वर्षप्रस्तरा नूनमेते स्पर्शाद्भूयो यत्प्रयच्छन्ति शैत्यम् ।। 68

[8]सावाक्षेपं तन्वतः शूलपाणेर्मौलिं [9]व्याप्ता च्छादयित्वा परागे ।
तन्वाना किं धूसरं तस्य वासो जातोत्सेका केतकाली जहास ।। 69

निर्मायोर्वीं नीपधूल्याम्बुवर्षैः सौदामिन्या धाम पान्थाङ्गनानाम् ।
श्वासैर्वायं व्योमशब्देन चाब्दो व्यक्तंचक्रे वारिजातासनत्वम् ।। 70

[10]पाथोवाहे प्रावृषेण्ये प्रभूते प्रादुर्भूते पक्वजम्बूनिदाने ।
केकिश्रेणी केतकीकेलिनीशः केदाराली चोत्कलापा बभूवुः ।। 71

नृत्तेऽब्दानां पंक्तिमालोक्य केकीमेधांचक्रे सिन्धुराजीवनानाम् ।
प्रोवाहास्य श्यामशाखीच्छदानामेधांचक्रे सिन्धुराजीवनानाम् ।। 72

---

1. गुप्ता 2. दात्र्यामाहरन्तं 3. दिद्वत्र 4. मुञ्चन्त्यम्भोवाह 5. स्त्रर्वास्तव्या 6. नर्पयन्त्यम्बुवाहे 7. सन्तोषया 8. सावाक्षीपंतस्स्वतः 9. व्याप्तः 10. पथोवाहि ।

पंक्तीभूय प्रादुरासन् बलाका नाथं नात्राश्लिष्यति स्माबला का ।
सिन्त्रोरूर्म्यः कूलसीमामराला: प्रायोऽत्रन्धन् व्योम्न्यधावन् मराला: ।। 73

कादम्बाली कौतुकेन व्यलासीत् कादम्बाली कातरत्वं प्रपेदे ।
धारालाभाद्दर्दुरौघा ननन्दुर्धारालाभाज्जातिपुष्पेषु माध्वी 74

केतक्याली वासनावासनानां कान्तारान्ता तन्वती तन्वतीव ।
अध्वन्याङ्गं दर्पकन्दर्पकन्दं कर्त्री भृङ्गीमानितामानिताऽभूत् ।। 75

अम्भोदानां दत्तहंसारसानामालीकेजे मानिनीसारसानाम् ।
धारा दिक्षु व्यानशे सा रसानां जज्ञे नाख्या भूतले सारसानाम् ।। 76

तस्मिन् काले रामभद्रो [1]घनालीं शम्पावल्लीं शक्रचापञ्च दृष्ट्वा ।
क्षोणीकन्यावेणिकावीक्षणभ्रूलक्ष्मीं ध्यायन् लक्ष्मणं प्रत्यभाणीत् ।। 77

केतक्योऽस्मिन् केवलं चन्द्रहासा [2]धारावारा दारुणा दन्दशूका: ।
विद्युन्माला वीतिहोत्रोग्र[3]कीला: कालाम्भोदा: कालकूटा भवन्ति ।। 78

आतन्वानोऽप्यम्बुदो मोहमन्त: सीतावक्त्रश्रीमुषां पद्मचन्द्रौ ।
[4]रुन्धे साह्यं कल्पयन्तौ सुमेषोरित्याश्वासं साम्प्रतं प्राप्य वर्ते ।। 79

एवं भावं दर्शयित्वाऽनुवारं दीनालापान् वक्तुरुन्मुच्य धैर्यम् ।
इक्ष्वाकेन्दोराशयस्य प्रसादं कर्तुं मेघ: किं न्वशाम्यत्क्रमेण ।। 80

धात्रीशानां पटहनिनदान् दण्डयात्रोद्यतानां
[5]तत्रायातान् विशदगरुतां तादृशक्रेंकृतानि ।

---

1. घनाली 2. धारावारां दारुणादन्दशूका 3. कीला 4. रुन्धेऽसह्यं
5. तत्रायातां ।

पद्माङ्कूरप्रसृमरदृशां षट्पदानाञ्च नादान्
दृष्ट्वा रामः प्रमदमदधात् सूर्यवंशावतंसः ।। 81

चित्रव्याकृदनेकपद्यघटितव्यस्ताक्षराविर्भव-
त्प्रागल्भ्यप्रतिपादनप्रति[1]पदानन्दत्कवीन्द्रात्मना ।
देव्योद्यन्मतिसख्ययामधुरवाण्यम्बाख्यया निर्मिते
श्रीरामायणसारकाव्यतिलके [2]सर्गोऽगमद्द्वादशः ।। 82

इति श्रीरामायणसारकाव्यतिलके

द्वादशः सर्गः



1. पदानंतत् 2. सर्गोऽगत् द्वादशः ।

# श्रीरामायणसारकाव्यतिलके

## त्रयोदशः सर्गः

कादम्बिन्याः क्षालयन् कालिमानं कादम्बानां कौतुकाधानहेतुः ।
[1]शाम्यत्पङ्कः पक्वशालीप्रभालीशाली सद्यः शारदो वासरोऽभूत् ॥ 1

विद्युद्वध्वा विप्रयोगप्रवृद्धं तापं सोढुं नैव शक्तस्तदानीम् ।
कर्पूरश्रीगन्धचर्चान्वितः किं पाथोवाहः पाण्डिमानं प्रपेदे ॥ 2

सीताजानेरात्मसन्तानमौलेर्धामोन्मेषं प्राप्नुयादेवमित्थम् ।
तेजो व्यञ्जंस्तन्मनोऽञ्जेन[2]साकं [3]नालीकान्यानन्दयामास भास्वान् ॥ 3

किम्मीराणां कीरयूनां [4]कृतद्योसञ्चाराणां पत्रदीप्तिं बलारेः ।
[5]धन्वालोक्य प्राप्तनृत्तान् मयूरान् किं न्वातन्वन्वीक्ष्य काशानि हासान् ॥ 4

भास्वानात्मोत्पादितं पङ्कमुस्त्रैः साहस्रैराक्षिप्तवानित्यमर्षात् ।
भद्रेभाणां पादमाश्रित्य मेघो भूयो भूयो भूतले[6]तन्वधात्किम् ॥ 5

[7]अम्भोवाहाः कुम्भिवेषादवन्यां [8]जातास्तत्राप्युद्गतैर्दानवर्षैः ।
सारङ्गाणां त्राणलीलामतन्वन् नोज्झन्ति स्वं प्राग्गुणं दानशीलाः ॥ 6

छन्नाकाशाः कोशकोशप्रकाशाः शुभ्राब्जौघादुत्पतन्तो मयूखाः ।
हंसाद्योताश्चक्रुरब्जान् वलक्षान् [9]नोचेज्जातिर्जन्म चाल्पं किमेषाम् ॥ 7

---

1. शाम्यत्वङ्कः 2. सारं 3. नालीकान्यां नन्दयामास 4. कृतिद्यो 5. धन्वालोच्य 6. तन्वदात् किम् 7. अम्भोवाहा 8. जातस्तत्र 9. नोचेद्यात्या जन्मनेल्वं किमेषाम् ।

........................................................दीव्यन् ।
इद्धैभद्रैरेव भद्रा मदान्धा रोधांसि स्म स्वैर्विषाणैः कषन्ति ॥ 8

[1]पाथोराशिं प्राणनाथं [2]खरास्त्रैः श्रीरामः [3]संशोषयेदित्थमार्त्या ।
जग्मुर्मन्दं जातदैन्यास्तटिन्यः भाविज्ञानं [4]ह्यप्रसन्नात्मकानाम् ॥ 9

आत्मोत्थानामम्बुजानामभावात् प्राक्तोयानि [5]प्राप्नुवन्नाविलत्वम् ।
एतान्युद्यन्त्येक्ष्य सद्यः प्रसेदुः स्वापत्येक्षा [6]सौख्यदात्रीह लोके ॥ 10

उर्वी विष्णोर्वल्लभस्यानुकारं कुर्वाणा किं पक्वशालि प्रकाशात् ।
हैमं वासो बिभ्रतीहाब्जचक्रौ शुद्धं सत्वं हंसभासा विवव्रे ॥ 11

शश्वद्गीतं शालिगोपाङ्गनानां तन्वन्ति स्माकर्ण्य पुण्ड्रेक्षुकाण्डाः ।
तासां पूर्वोन्मुक्तमुक्ताभिषेकं सारस्यश्रीवेदिनां साम्प्रतं तत् ॥ 12

कान्तारालो पाकयुक्ता नदीनां दीनान्यम्बून्यात्तपुष्प[7]प्रकाशाः ।
काशाः स्फीता वासना शारदानां दानाम्भोभिर्दन्तिपंक्तिश्च कान्ता ॥ 13

शत्रून् जेतुं शातशातामतन्वन् नालीकानां पालिकां राजहंसाः ।
प्रत्यग्राणां प्राप्नुवन् सप्रशंसा नालीकानां पालिकां राजहंसाः ॥ 14

इन्धामासानीरजाः नीरजाली रात्रौ रेजुस्तारका तारकान्त्या ।
स्वच्छं जज्ञे जीवनं जीवनन्द्यं शाल्यात्तश्रीगौरवा गौरवात्सीत् ॥ 15

धात्रीशानां दण्डयात्रोद्यतानां भेरीनादान् भानुसूनुस्तदानीम् ।
श्रुत्वाऽन्वेतुं शूरवर्यानशेषान्[8]कीशाधीशानादिदेशाञ्जनेयम् ॥ 16

---

1. पाथोराशिः 2. कराग्रैः 3. संशोषयदित्थमार्त्या 4. न्यग्रसन्ना 5. प्राप्नुवन्त्याविलत्वम् 6. सौख्यधात्री 7. प्रकाराः । 8. कोशाधीशानादिशेषांजनेयम् ।

सुग्रीवाज्ञां (स्वोत्तमाङ्गेन धृत्वा) व(न्या वन्या वासिनां) वानराणाम् ।
आह्वानाय प्राहिणोज्जाङ्घिकत्वख्यातान् दूतान् गन्धवाहात्मजातः ।। 17

रामः श्रीमान् व्योमसी……………धेय……………… ।
……………पानाच्च मत्तः नो जानीते भानुमत्सूनुरस्मान् ।। 18

प्राप्ता वेला लङ्घिता च प्रतिज्ञा सौमित्रे त्वं सत्वरं तत्र गत्वा ।
साम्राज्यश्रीलाभसौख्येन मत्तं भाषस्वेत्थं पङ्कजाताप्तपुत्रम् ।। 19

[1]पीत्वा दृप्तो वालिनो रक्तधारामास्ते पत्री तूणनीडान्तराले ।
उद्ग्रीवस्सन् प्रेषितोऽसौ मया चेत्तत्रागच्छेत् क्षिप्रमास्वादं[2]वेदी ।। 20

एवं वीताशङ्कमीशं [3]कपीनामाख्याहीति प्रेषितो राघवेण ।
धृत्वोद्दण्डं चापदण्डं प्रचण्डः किष्किन्धां द्राङ्मागधेयः प्रपेदे ।। 21

तं दोर्न्यस्तोद्दण्डकोदण्डदण्डं कल्पान्तोद्य[4]द्भानुमत्कोटिकल्पम् ।
दूरे दृष्ट्वा दूयमानान्तरङ्गात् भ्रेमुः केचित् नेदुरन्ये प्लवङ्गाः ।। 22

तेषां घोषान् सोऽवकर्ण्यापि तारां ताराप्रेयश्चारुवक्त्रां रुमाञ्च ।
बाहुभ्यामाश्लिष्य मत्तोऽर्कपुत्रः नैवाजानादागमं लक्ष्मणस्य ।। 23

कोपाटोपादाक्षिपन् द्वारपालान् चापारोपात् चण्डिमानं प्रपन्नः ।
सुग्रीवस्य प्राप धामाग्रसीमां सोऽयं वासं केसरीव द्विपस्य ।। 24

बुध्द्वा सद्यो भूरिभिश्चापकाण्डज्याटङ्कारै [5]र्मागधीनन्दनस्य ।
शान्तं कर्तुं सान्त्वनैस्तस्य कोपं तारां धीरां प्रैषयत् पूषसूनुः ।। 25

1. वे…दृप्तो 2. वेदि 3. कवीनां 4. भानुमत्कोपिकल्पम् 5. मागधीं नन्दनस्य ।

हालापानात् घूर्णमानारुणाक्षी [1]शीर्यत्केशा स्रंसमानावतंसा ।
सैषा तेन प्रेषिताऽऽगत्य वेगात् सौमित्रिं तं सान्त्वनैरन्वनैषीत् ॥ 26

तारासान्त्वैः शान्तिमासाद्य दूरादागच्छन्तं लक्ष्मणं वीक्ष्य दोर्भ्याम् ।
गाढाश्लिष्टां तां रुमां मुञ्चमानः भास्वत्पुत्रो भर्मतल्पादुदस्थात् ॥ 27

वन्दित्वा तं वानरेन्द्रो बभाषे सौमित्रे त्वं सौम्य सर्वं मदीयम् ।
चित्ते क्षन्तुं मन्तुमर्हस्यकृत्यं नूनं सूनोः [2]कः पिता नो सहेत ॥ 28

नो मे गर्वः पूर्वमेवावनीभृद्वन्याऽवन्यावासिनां वानराणाम् ।
आह्वानाय प्रेषिता वेगवन्तो [3]दूतास्ते चायान्ति संख्यामतीताः ॥ 29

एवं शंसन् हेमपर्यङ्किकायां लक्ष्मीयुक्तो लक्ष्मणेनोपदिष्टः ।
आशाव्यापिन्यानकानां निनादे नेता वेगान्निर्जहे वानराणाम् ॥ 30

आयान्तं तं मागधेयेन साकं पादद्वन्द्वं प्रश्रयाद्वन्दमानम् ।
स्वामी रामस्तं परिष्वज्य दोर्भ्यां [4]लज्जानम्रं लालयामास वाग्भिः ॥ 31

आगच्छतामथ वलीमुखसैनिकानां पांसूच्चय………………… ।
……बिबत्र ..रघुशेखराय शाखामृगागमसमुत्थित इत्यभाणीत् ॥ 32

अथ गवय गवाक्षरम्भमैन्दद्विविदसुषेणनलर्षभा……… ।
………………………………………वेगदर्शश्च ॥ 33

[5]अह्वायान्ये चाययुस्तत्र कीशास्तारापुत्रो जाम्बवान् वायुसूनुः ।
नीलश्चात्मानीकिनीभिः प्रसिद्धास्सन्नद्धाभिः संवृता यूथनाथाः ॥ 34

---

1. शीर्यत्केशः स्रंसमानावतंसम् 2. कं 3. दूतास्तेजा यान्ति 4. लज्जानम्रा
5. आह्वायान्ये पूययुस्तत्र केशाः ।

तानागतान् तरुचरप्रवरान् निरूप्य
पार्श्वस्थितान् रघुपतिं रविभूरभाणीत् ।
आज्ञापय त्वमधुना भवतो निदेशे
[1]भृत्यानिमानवहितान् पृथिवीतलेन्दो ॥ 35

इति सादरमीरयन्तमेतं शबलैः कीशबलैः परीतपार्श्वम् ।
[2]प्रमदेन विलोक्य भानुसूनुं परिरेभे [3]पतिरुर्वरासुतायाः ॥ 36

अनन्तरं वालिभिया हरित्सु समन्ततः सञ्चरणं स्वकीयम् ।
तत्तद्विशेषानगदीद्विशेषान् ककुत्स्थवीराय कपिप्रवीरः ॥ 37

प्राचीं कांश्चन चतुरान् परानुदीची-
मन्यांश्च प्लवगचमूपतीन् प्रतीचीम् ।
आदिक्षत् कपितिलकः प्रभो रघूणा-
मादेशादवनिभुवो गवेषणाय ॥ 38

गन्धमादनमुखान् वलीमुखान् जाम्बवन्तमपि नीलमङ्गदम् ।
प्राहिणोत् प्लवगराट् मरुत्सुतं दक्षिणं तदनु दक्षिणां दिशम् ॥ 39

अर्थैकसाधनतया हृदये विमृश्य
पार्श्वस्थिताय पवमानतनूभवाय ।
राजीवबान्धवसखं निजनामधन्यं
रत्नाङ्गुलीयकमदात् रघुवंशनेता ॥ 40

गतिविधौ क्षितिजापरिमार्गणक्रमहिता महिता महिता द्रुतम् ।
अथ दिशः प्रययुः प्रभवन्महोलहरयो हरयो हरयोधिनः ॥ 41

---

1. भृत्याविमानवहितान् पृथिवीं तलेन्दो 2. प्रमदेव 3. पतिरुर्वरासुतायाम् ।

मार्गं मार्गं मार्गमुर्वीसुतायाः[1]स्वाराड्वित्तस्वामिपाशायुधाशाः ।
प्रस्थातारस्तत्र वीताभिलाषाः कीशाः क्लेशादाशुगत्या निवृत्ताः ।। 42

वलवैरिसूनुभवनीलजाम्बवत्पवमानतनन्दनमुखास्तु वानराः ।
कलशात्मजेन कलितां दिशामभिप्रययुर्महीदुहितृमार्गणाकृते ।। 43

प्रैक्षन्त ते पथि कपिप्रवरास्तरक्षु-
हर्यक्षहस्तिगवयर्क्षविनिर्मितान्ध्यम् ।
विन्ध्यं धराधरमवन्ध्यवनप्रदेश-
सन्ध्यंचिताभ्रसलिलद्युतिजातसन्ध्यम् ।। 44

तदनु कपिषु हर्षवत्सु तत्र स्थितममरद्विषमात्तरौद्रवेषम् ।
नमुचिमिव ममाथ नाकभर्ता नगरिपुनन्दननन्दन[2]स्सुनन्दः ।। 45

प्रयायिणः पथि[3]बहुलाधिकश्रमाः प्लवंगमा जलनभसङ्गमाध्वना ।
प्रविश्य ते ददृशुरथो मंहागुहां तदन्तरे प्रथितशुभां स्वयम्प्रभाम् ।। 46

सलिलासनि.................................
.........................जहृषुस्तत्रपम् ।
...........(उप)भुज्य वनौकसः सुधा-
रसलाभादिव ते दिवौकसः ।। 47

भुवनातिशायिरुचि भूरि भूरुहा-
मवलोकनादधिगताङ्कृ (तव्रताः) ।
(हरयो निमीलि)तदृशस्तदाज्ञया
रयतो (गिरीन्द्र)बिलतो विनिर्गताः ।। 48

---

1. स्वाराड्वित्त 2. सुनन्दान् 3. ब...धिकतमाः ।

बहवो दिवसा गता बभूवुर्न कृताऽस्माभिरहस्करान्वयेन्दोः ।
अहहोपकृतिर्जटायुषे चेत्यनुलेपुर्व्यथिताशयाः प्लवंगाः ।। 49

तथा निजभ्रातृकथां रघुप्रभोः कथामथाकर्ण्य विनिर्गतो बिलात् ।
स्वदूरदृष्टचा समुदीक्ष्य वानरानुवाच सम्पातिरुदञ्चयन्मुदम् ।। 50

उत्थितार्तिरधिलोकमुर्वराकन्यकामणिरशोककानने ।
वृत्रशासनवितीर्णपायसप्राणिता निवसति प्लवंगमाः ।। 51

इत्थं ब्रुवन् पुत्रसुपार्श्ववृत्तं निशाकरस्य व्रतिनश्च वृत्तम् ।
श्रीरामवृत्तश्रवणात्पतत्रजन्मापि च स्वस्य जगाद सोऽयम् ।। 52

एवं कथां कथयता विविधामनेन
तत्कालकन्दलितसान्द्रतनूरुहेण ।
सम्पातिना समुदपाति ततः स्यदेन
बाल्यं वयो विजहता फणिभोजनेन ।। 53

आश्वासितास्तस्य मृदूदितेन विश्वासभाजो विधुतात्मखेदाः ।
प्रमोदमानाः प्लवगप्रवीराः प्रपेदिरे वारिनिधेः प्रतीरम् ।। 54

बडबामुखानलशिखान्तिकायितं वसुधापुरंध्रिवसनं वनौकसः ।
बलिशासनादि [1]सुरवर्गवर्णितं निरवर्णयन्त निनदन्तमर्णवम् ।। 55

ललितप्रवाललतिकामनोहरे वनराशितामधिगते भृताण्डजे ।
करकाधिकोदयजुषो घना घनाः कलयन्ति यत्र किल गर्जितं मुहुः ।। 56

कुलशैलराजतनयाश्रयाकृतिर्दधदेव [2]विद्रुमलताजटास्तु यः ।
अवदातफेनममृतांशुमुद्वहन् प्रकटीकरोति महिमानमन्वहम् ।। 57

---

1. सुरवर्गवर्णवं 1. विद्रुमलता जटासु यः ।

अतिदूरमागवतः श्रमच्छिदे निजकामिनीमणिजनस्य यद्भूतः ।
पटवासपांसुरिव केतकीरजस्तटसीमनि स्फुरति वासयन् महीम् ।। 58

सततं गिरीशसखतामुपेयिवान् परमाश्रितो मकरशंखकच्छपान् ।
त्रपयेव किं प्रतिपदं दधाति यस्तत शैवलासितपटावकुण्ठनम् ।। 59

जलनीलिकामणिखलीनलीलया हरयो महालहरयो मनोहराः ।
विलसन्ति यत्र शफरा जितक्रमाः पवमानवेगगरिमानुसारिणः ।। 60

शयितस्य यत्र वहनेन शार्ङ्गिणः
शयिताय जिह्मगवराय वीचिकाः।
निजसंगमाविरत [1]शीतलानिला
दशनं दिशन्ति किमु ता न जिह्मगाः ।। 61

बुधसात्कृतामृतरसान्नसंभवान् सुकृताङ्कुरानिव सुवृत्तमुक्तिकाः ।
समुपेत्य सन्तततदुच्छ्रयेण किं कमलाश्रयो जगति यो विराजते ।। 62

लवलिकावलिकारणतीरभूस्तरुणिमारुणिमान्वितविद्रुमः ।
ध्रुवनगावनगाढयशोभरः कनति यो नतियोग्यनिजाकृतेः ।। 63

तटविकस्वरनूतनकेतकीपतितपांसुपरीतनिजान्तरम् ।
स्फुरति यस्य पुरारितनुः पयः ससितभासितभासितभा इव ।। 64

राजीवराजीवरसिन्धु[2]सङ्घराजीवराजीवलनोच्छ्रितो यः ।
वेलानवेलानगकाण्डपंक्तिवेलानवेलानघतां व्यनक्ति ।। 65

आस्ते रवाणामिह यो विराजन्नादानतो नीरतरङ्गजानाम् ।
यूथं श्रिते यत्र हरित्तटोऽब्दनादानतो नीरतरङ्गजानाम् ।। 66

---

1. शीतलाविला 2. सङ्ग ।

कृताध्वगादीनवतानवेन भात्यूर्मिना फेनवतानवेन।
भर्ता तथा यो लवलोलतानां बहून्मिषत्पल्लवलीलतानाम् ।। 67

वारन्तरस्थं सघनानुसारं सारङ्गयूथं विविधप्रकारम् ।
कारण्डवान् यः समुपैति तारं तारङ्गघोषं च समीरहारम् ।। 68

सारवारिलहरीपरम्परा सारवा निगदतीव यद्यशः ।
गौरवासनवफेनभावप्रभागौरवादचलपालनोत्थितम् ।। 69

पाठीनेन्द्रप्रथितगतिं जानाना नानारूपाः शकुलपुरोगा मीनाः ।
मीनाश्शक्रं पविजयिवालादानादानाकोत्थाः किमु धुनते यन्मध्ये ।। 70

ततं भृतधराधरालि शकुलाकुलामिततरं तरङ्गमहितम् ।
हितं धृतनदं नदन्नवघनाघनातिशयदं यदम्बु सततम् ।। 71

[1]ओष्ठ्यप्रचुरम्

कुर्वन् भूभृद्गुप्तिमाप्तप्रभावो यो भात्यूर्मीर्वर्मितो युद्धमेव ।
भूयो भूयो विद्रुमस्तोमभास्वद्बाणोऽस्वप्नस्वामिनौर्वोष्मकोपः ।। 72

[2]निरोष्ठ्यम्

सततं चिरत्नतररत्नसंग्रही
तदनीक्षणाय किल तारनादधृत् ।
अधिकान्धकारकृदसंख्य[3]कालिका-
जलनीलिकानिकरतश्चकास्ति यः ।। 73

1. ओष्ठ्यमु 2 निरोष्ठ्यमु 3. नालिका ।

ओष्ठ्यनिरोष्ठ्यसंकरः

यो दीप्यते शोणमणिद्युतिप्रभैः महः स्फुटं भोगिपतेः पुरावृतेः ।
[1]व्यञ्जन्वलद्वीचिकुलावर्तां भरा[2]त्परिस्फुरन्मीनमहाभटैर्युतः ।। 74

निरोष्ठ्यसंकरः

नवीनवीचिव्रजपोषितो यो घनोत्करोद्यद्ध्वनिभिस्तिमिक्रमैः ।
तनोति भीतिं मणिभिश्च फेनिलो दृगुत्सवं शैवलवल्लिपंक्तिभिः 75

लहरीविहारिशफरीनिकरैः............भयंकरमपारमपाम् ।
अथ नाथमेक्ष्य तमगाधमुपप्लवगा बभूवुरखिलाः प्लवगाः ।। 76

वनौकसो वालिभुवा तदानीं सञ्चोदिताः स्वस्वगतिप्रमाणम् ।
भर्तुर्नदीनां तरणक्षमं तत् बभाषिरे भल्लुकराजयुक्ताः ।। 77

अथाङ्गदं तं स्वगतिं गदन्तं निवार्य भल्लूकसमाजनेता ।
धीमन् हनूमन् धृतिहेमशैलेत्याहूय वातात्मजमाबभाषे ।। 78

चतुर्णवीं चतुर एव लंघितुं लवणाब्धिलंघनमिदं कियत्तव ।
इति भल्लुकाधिपतिना पणायितः प्रमदं बभाज पवमाननन्दनः ।। 79

हनुमान् भुजाविलसमानमहस्समानराशिरसमानबलः ।
अभिवर्धमानतनुरम्बुनिधेः स्वयं बभूव स लिलंघयिषुः ।। 80

तदा पवननन्दनस्तरुचराशयानन्दनं
समस्तजनवीक्षणैः सह सहर्षमुद्योतवान् ।

1. व्यञ्जद्वलद्वीचि 2. त्वरिस्फुर ।

महेन्द्रमवनीधरं महितहीर दन्तोज्ज्वलं
महेन्द्र इव सिन्धुरप्रवरमारुरोह (स्वयम्) ।। 81

(इतः परमेकस्य पत्रस्य मातृकायां लोपात् ग्रन्थपातः)

इति श्रीरामायणसारकाव्यतिलके

त्रयोदशः सर्गः



# श्रीरामायणसारकाव्यतिलके

## चतुर्दशः सर्गः

अद्रिं महेन्द्रमथ सान्द्रतरुप्रकाण्ड-
मारुह्य गन्धवहसूनुरनूनधर्मा ।
आनन्दयन्नखिललोकदृगम्बुजानि
प्रद्योतनः प्रथमशैल इव व्यलासीत् ॥ 1

रामस्य तत्र हनुमान् रमणीयमूर्ति
संस्मृत्य गोष्पदमिवाब्धिमियेष तोषात् ।
उल्लंघितुं भुवि बलातिबलोन्नतस्य
संसेवनं कलयतां किमसाध्यमस्ति ॥ 2

[1]कर्णौ निकुंच्य हनुमान् मुखमुन्नमय्य
नेत्रे प्रसार्य नितरामभिवर्धमानः ।
आरूढवान् पत(ग)राडिव तन्नगाग्र-
माभादहीन [2]बलधारिणि युक्तमेतत् ॥ 3

पादाग्रघट्टनविधूततदद्रिशाखि-
पुष्पोच्चयान्निपतता रजसा परीतः ।
जैत्रप्रयाणसमये हनुमान् प्रकृष्टः
[3]पिष्टातकैः पिहितमूर्तिरिव व्यराजीत् ॥ 4

---

1. कणौ 2. बलहारिणि 3. पिष्टातकौ ।

पादार्पणात्तदनु तस्य नगो महेन्द्रः
पातालमा(प पव)नात्मजजैत्रयात्राम् ।
पौलस्त्यदुस्सह [1]महापृतनातिभारा-
[2]न्नागान्नतान् प्रति स वक्तुमिव प्रवृत्तः ॥ 5

रोषारुणामथ विनिक्षिपति स्म दृष्टिं
लङ्कापुरे स हरिराशु तदास्थितस्य ।
दर्पान्धकारदलनाय दशाननस्य
व्यापारितामिव नवीनमयूखरेखाम् ॥ 6

प्राकाशत प्रतिपदं परिवर्धमानो
विन्ध्याचलेन्द्र इव गन्धवहस्य सूनुः ।
ताराग्रहाश्च तरला[3]स्त्रिदशाश्च भीताः
संवीक्ष्य तं कलशजोऽपि तदा शशङ्के ॥ 7

[4]एतस्य कण्ठमभितः परिवृद्धिभाजो
नक्षत्रपंक्तिररुचत्परिलम्बमाना ।
मुक्तावलीव पवमानसुतस्य शीघ्र-
मागामिहारधरणं [5]परिसूचयन्ती ॥ 8

आचख्युरेव परिवृद्धिमुपेयिवांसं
दृष्ट्वा द्विधा तमाखिलाश्च जना विराजम् ।
विख्यातविक्रमविजृम्भणदर्शकत्वात्
गौराननप्रकटनागरिमान्वितत्वात् ॥ 9

---

1. महपृतनाति, 2. नागन्नतान् 3. त्रिदशाश्व 4. एकस्य 5. परिसूच-यन्ति ।

आस्फालयद्भुजमसौ हनुमान् प्रहृष्टः
मध्येपयोधि शयितो मधुजित्तदानीम्
निद्रां त्यजन्नपि तदारवगौरवेण
[1]निद्रामुखं पुनरगात्तदतीव बुध्द्वा ॥ 10

आलोकितुन्वनचरानखिलान् प्रहृष्टान्
कर्तुं स गन्धवहभूरकृताट्टहासम् ।
लङ्कापुरस्थितिविधानतया निरूढं
गाढं त्रिकूटनगकूटमिव प्रभिन्दन् ॥ 11

विस्रंसमानशरभं विचलन्मदेभं
विक्षोभिताशयतरक्षु विशीर्णऋक्षम् ।
उध्दूतवातमृग[2]मुद्द्रुतसिंहयूथ—
मुद्यन्महोनिधिरुदप्लवताञ्जनेयः ॥ 12

नासौ सहस्रघृणिरुद्गमनाद्धरित्र्याः
नासौ विहङ्गमपतिर्गरुतामभावात् ।
नासौ हिरण्मयनगश्चलनक्षमत्वा–
दित्येक्ष्य मारुतिमथाकथयन्नमर्त्याः ॥ 13

तस्योरुवेगपवनेन समुज्जिहाना–
स्तत्रान्वयुर्धरणिजाः पवमानसूनुम् ।
आलोकितुं धरणिजां सहजामनेन
यान्तःकिल स्वयमपि प्रणयानुबन्धात् ॥ 14

गाढोरुवेगगरिमोत्पतितैरमुष्य
संवर्धितो[3]लघुभिरम्बुधिरम्बुपूरैः ।

1. निद्रामखं 2. मुद्रुत । 3. रघुभिः

अङ्‌घ्रि स्पृशद्भिरतनोत् किमु तत्र पाद्यं
निर्गच्छते रघुवरस्य हितार्थमस्मै ।। 15

बाणो विमुक्त इव बाणकुलाधिपेन
कुत्राप्यकुण्ठितविधो धृतिमान् हनूमान् ।
जिह्मेतरत्वमधिगम्य तदा जगाम
वेगान्वितो न किमु मार्गणकृत्यमेतत् ।। 16

आदौ सुवर्णशिखरीव खगेशितेव
पाथोजबन्धुरिव भौम इव क्रमेण ।
विद्युद्विशेष इव तत्र विलोक्यते स्म
वातात्मजस्तदनु वर्त्म दृशोर्ललंघे ।। 17

[1]अस्वेदलेशमनुदीततृषाभिषङ्ग-
मक्षुत्प्रसङ्गमनुपात्त[2]जडत्ववृत्ति ।
श्रीरामसंस्मरणदिव्यसुधानुभूत्या
जीमूतवर्त्मनि जगाम समीरसूनुः ।। 18

नानाकनत्कनकशृङ्गगणेन दीव्य-
न्नानाकमुद्गतवता फलितागमेन ।
[3]मैनाकराडुदकतो मणिचित्र[4]सानु-
र्मैनाक इत्यचलराडुदगात्तदात्वे ।। 19

[5]अर्घ्यासनैः प्रहितमम्बुधिना हनूमान्
तं पाणिना न विमृशन् प्रजहार सोऽयम् ।
अद्रिः कदाप्यविदिताशनिपातरीति-
स्तत्पातरीतिमकृतात्मनि तत्प्रहारम् ।। 20

---

1. आस्वेद 2. जठत्व 3. मैनकरादुदकतो 4. सानुमैनाक 5. आ…सने-प्रहित ।

सप्रश्रयं निगदिता गमनेन तेन
सम्भाष्य तूर्णमधिसिन्धु ततः प्रयान्तम् ।
आलोक्य गन्धवहनन्दनमादितेयाः
सन्तुष्टुवुः समधिकाद्भुत सिन्धुमग्नाः ॥ 21

एवं प्रयाति सति वायुसुते तदानी-
माज्ञाव(शा)दजरसां सुरसाऽम्बुराशेः ।
[1]उद्गत्वरीव (समु)दग्रमुपेत्य नाग-
माता पुरोऽस्य ववृते विवृतास्यगर्ता ॥ 22

तस्यां प्रवृद्धवपुषि क्रमशः स्वयञ्च
तादृक्तनुस्तदनु वायुसुतो ह्रसीयान् ।
तद्वक्त्रमेत्य निरगात् स ततः शशीव
राहोः क्रमोऽयमुचितो हि निधेः कलानाम् ॥ 23

कार्यं त्वया कलितमेव ककुत्स्थभर्तृ-
र्वातात्मजात वचसा सुरसा सुराणाम् ।
आयातवत्यहमिहाधिककौशलं ते
दृष्टं प्रयाहि शुभमस्त्विति सा तिरोधात् ॥ 24

छायां निगृह्य जलधौ निजचंक्रमस्य
पंगुत्वसंघटनपाटवशालि सत्त्वम् ।
छायाग्रहं तदनु केसरिडिम्भ एष
मत्तद्विपेन्द्रमिव मार्गरुधं बिभेद ॥ 25

इत्थं [2]निरस्य तरसा सुरसां हनूमान्
छायाग्रहं च विचरन् जलवाहमार्गे ।

---

1. उद्गत्वरीव वृ...दग्र 2. विरस्य

सम्प्राप दक्षिणसरित्परिणेतृपारं
पाथोजबन्धुरपि पश्चिमसिन्धुतीरम् ॥ 26

अभ्रावलम्ब[1]मधिरूढवतोऽविलम्बं
तत्पादपाननुसरन् शिशिरस्समीरः ।
अध्वश्रमं परिजहार हनूमतोऽस्य
श्रान्तिं सुतस्य सहते जनकः कथं वा ॥ 27

सीतासखस्य निजसन्ततिशेखरस्य
कार्यैकतानहृदये तनयेऽञ्जनायाः ।
सन्दर्शयन् समधिकं किल तत्र राग-
मम्भोजिनीपतिरनल्पमधत्त रागम् ॥ 28

साक्षात्पयोधिजनुषो जनकात्मजायाः
प्रायः शुभं घटयितुं पवनात्मजातः ।
लङ्कामगादिति निवेदयितुं स[2] लोक-
बन्धुस्तथाऽभजत पश्चिमसिन्धुबन्धुम् ॥ 29

वायोः सदेशसहवाससखित्वभाजः
सूनोस्तनु[3]श्रमनुदे सलिलाधिपेन ।
अग्रेऽर्पितो विकचहल्लकराशिरेव
सन्दृश्यते स्म सुरवर्त्मनि सांध्यरागः ॥ 30

आत्मौकसां हितकृते समुपेतमेतं
पश्येयुराशरभटा इति[4]दृष्टिमेषाम् ।
निह्नोतुमेव विमना वियता स्वनैल्यं
तादृक् प्रपंचितमिव प्रचुरं तमोऽभूत् ॥ 31

---

1. अधिरूढवतोऽथलम्बम् 2. लेकबन्धुः 3. श्रममदे 4. दृष्टमेषाम् ।

मेधावतो जिनवतः सुरसामुपाया-
दारात्रिकां हनुमतस्तनितुं द्युपात्रे ।
मुक्तागणा विनिहिता इव देवताभि-
स्तारागणस्तत इतो नितरामराजीत् ॥ 32

यस्यात्मनोऽहमुदितः स रघूद्वहस्य
कार्याय मारुतिरिहागत इत्यमुष्य ।
रुन्धन् दुर्गंधमसितोत्पलगन्धबन्धु-
[1]रिन्धे स्म दीधितिभिरेधित सिन्धुरिन्दुः ॥ 33

इत्थं भजेदिह समृद्धिमतीव राम-
चन्द्रस्य कीर्तिरिति शंसितुमेव चन्द्रः ।
आकाशदेशमधिगत्य (सुधासुधाम)
ज्योत्स्नां दिशासु विततामतताखिलासु ॥ 34

लङ्कां त्रिकूटनगकूटगतां कवाट-
कोटीसमुत्कषितगोपुरगोपुराग्राम् ।
आलोकते स्म हनुमानथ विश्वकर्म-
निर्माण(कौशलभुवं दशकण्ठ)[2]भूतिम् ॥ 35

तद्देवतां नयनयोः पथि दृश्यमूर्ति
तादृक्प्रचण्डतरताडनतो विजित्य ।
तस्यां चिरं निजमुदं तमथो वदन्त
..........मुदयुंक्त.......... ॥ 36

..............................विवहिमूलं
सालं व्यलंघत समीरसुतः सलीलम् ।

---

1. इन्धिस्म 2. वभूतिम् ।

सालस्य लंघनमिहौपयिकं कपीना-
मेतस्य विक्रमनिधेरिदमद्भुतं किम् ॥ 37

प्राप्याविवेश पृषदंशकमात्ररूपं
लङ्कां (दिनेशकुलदीपक) किंकरो (ऽसौ) ।
पंचाननो गिरिदरीमिव सञ्चरिष्णु-
गन्धद्विपां तदनु गन्धवहात्मजातः ॥ 38

द्वारिस्थितान् दशमुखाप्तकरालदंष्ट्रान्
(दृप्तान्) कठोरविधिदण्डितचारचोरान् ।
अम्भोदसन्निभतनूनसिशूल[1]हस्ता-
नालोकते स्म हनुमाननिमेषदृष्टीन् ॥ 39

दृष्ट्वा कुरङ्गमदकुङ्कुमगन्धसार-
कर्पूरसौरभसुखां विशिखां ननन्द ।
वातात्मजोऽथ मधुमांसवपास्रविस्र-
गन्धानुबन्धि ककुभं बहुधा जगर्हे ॥ 40

पर्यङ्किका तुरगभद्रगजोष्ट्रमुख्य-
यानस्थितान् स करदीपसहस्रधन्यान् ।
संसेव्य पंक्तिवदनं शतधोपयातान्
रक्षःप्रभून् समवलोक्य दुधाव शीर्षम् ॥ 41

विस्रंसमानवसनान् विविधानुलापा-
नापाटलाक्षियुगलाननिदानहासान् ।
नाथैः समं विहरतोऽथ पुरे हनूमान्
नारीजना[2]न्मधुरसादलसान्निदध्यौ ॥ 42

1. हस्तीन् । 2. मधुररसात् ।

अत्यन्तभीकरघनापघनान् घनाग्र-
हस्तान् विशृंखलखलंखलहेमपुंखान् ।
गर्जावतोऽथ स हरिः प्रहरे चरिष्णून्
दन्तावलानपि दशास्यभटानपश्यत् ॥ 43

संशोध्य तत्र स विभीषण कुम्भकर्ण-
सुत्रामजिन्मुखगृहाणि महाकपीन्द्रः ।
धाम व्यलोकत ततो दशकन्धरस्य
हैमध्वजाकलितहर्म्यशतं हनूमान् ॥ 44

काश्चिद्व्यतीत्य करवालकरैः करालाः
कक्ष्यास्ततः कनककल्पितसंसदं सः ।
पाण्यग्रवेत्रशयकञ्चुकिभिः परीतं
शय्यागृहं दशमुखस्य शनैर्जगाहे ॥ 45

दन्तासनानि धवलास्तरणानि रत्न-
पाञ्चालिकाः प्रथितकाञ्चनचित्र[1]मञ्चान् ।
चन्द्राश्मक्लृप्तचषकान् मुकुरान् हनूमान्
मञ्जूषिका मणिमयीश्च ददर्श तत्र ॥ 46

पुष्पास्त्रशासकसखस्य सुखानि[2]पुष्य-
त्तत्पुष्पकं धरणिमस्पृशदाञ्जनेयः ।
निम्नं विलोक्य सचिराय दशाननस्य
मेने तदा मनसि पुण्यजनेश्वरं तम् ॥ 47

प्राज्याज्यपक्वमृगमेषशशादिमांस-
पाठीननिस्सरदरीणपरीमलेन ।

---

1. मञ्च्यान् 2. पुष्प पौ...पुष्पकं ।

आपूरितां द..............................
.......जिं....दुरितैकपथात् कृतीव ।। 48

काश्चिन्मनाग्विवलमानजलाग्निकान्ताः
कान्तामणीरसमयप्रसृतप्रकीर्णाः ।
अन्याः परा.... .........विधिवशा-
....................लोक्य स विस्मितोऽभूत् ।। 49

ताः पद्मिनीस्तदनु कोणपकुंजरस्य
केलीरसाद्गलितकैशिकशैवलालीः ।
वक्षोजपद्ममुकुलस्रुतघर्मवारी-
रैक्षिष्ट (केलिविगलत्स्व)दुकूलवासाः ।। 50

राजच्चिरत्नत(रकान्तिमदा)त्मशिल्पे
तल्पे[1]स्वपन्त (मसुरं विक)टं हनूमान् ।
अन्तःपुरे दशमुखं हरिचापयुक्त-
मेकत्र वारिदमिव स्थितमालुलोके ।। 51

बाह्यार्गलोदित[2]बलापहृताभिरस्य
[3]सीमन्तिनीभिरनपेतसमीप(भागम्) ।
पौलस्त्यमेक्ष्य पललाशकुलाधिनाथ-
मित्थं व्यतर्कयदयं मतिमान् हनूमान् ।। 52

तस्य प्रसृत्वरमहाचिरकान्तिभूम्ना
कुण्ठीकृतेक्षणपथस्तमवेक्ष्य साक्षात् ।
अन्याङ्गनाग्रहणमस्य न चेत् त्रिलोकीं
युक्तः प्रशासितुमसावि(ति)[4]सैष मेने ।। 53

1. स्वपंत व... 2. बलापहृतोभरस्य 3. सीमन्तिनीभरनवेत 4. नैष मेने।

सोऽयं सरोरुहभवस्य गुणं विहाय
धत्ते स्म धूर्तगुणमेव दमेन हीनः ।
ब्रह्माऽपि[1]सौवजनकर्मफलप्रमार्ष्टिं
कर्तुं न शक्त इति मारुतभूरमंस्त ॥ 54

मन्दोदरीं स हनुमान् प्रवितर्क्य तस्य
पार्श्वेशयां क्षितिसुतेति जहर्ष पश्चात् ।
स्वं जातिचापलममुञ्चदथान्तरङ्गे
चिन्तामवाप [2]चिरमार्तिकरां दुरन्ताम् ॥ 55

शैलाटनं जलधिसंन्तरणं विधाय
लङ्कां प्रविश्य दशकण्ठमकुण्ठवृत्ति ।
[3]निध्यायता निमिसुताऽद्य मया न दृष्टा
चेष्टां विधेरहह कः परिहर्तुमीष्टे ॥ 56

सम्पातिनोदितमशोकवनं विनैव
संशोधितं पुरमिदं सकलं मयाऽद्य ।
तत्र स्थिता यदि धरातनया भवेत्त-
दन्वर्थसंज्ञमिति [4]तत्प्रययौ हनूमान् ॥ 57

आशोणपल्लववशोरु रसालनीड–
देशोल्लसत्पिककिशोरदृशोपपन्नम् ।
आशोपरञ्जकमशोकवनं तदानीं–
माशोभताध्वनि दृशोरनिलात्मजस्य ॥ 58

मन्दानिलोच्चलदशोकमहीजशाखा–
लौल्यच्छलेन मुहुराह्वयदग्रभागे ।

1. सावजन 2. चिरमूर्तिधरादुरन्ताम् । 3. निध्यायिता । 4. तत्प्रययो ।

आलोक्य यत्पवनभूरसकृज्जहर्ष
बाञ्छास्पदं भुवि वनं न वनौकसां किम् ।। 59

छायास्थितां तरुततेर्जनकात्मजां तां
तस्मै प्रदर्शयितुमेव यदीयलक्ष्म्या ।
दीपावली सपदि दृष्टिपथं प्रणीता
[1]चाम्पेयराजिरनिलात्मभुवाऽऽचचाये ।। 60

तत्कालकन्दलित चन्द्रिकया सहैव
सख्यं विधाय स दिशासु समुद्गतानि ।
कर्पूरभूरुहरजांसि विकीर्य दृष्टचो:
[2]शैत्यप्रदानि शतधैव यदभ्यनन्दीत् ।। 61

संगीतमर्मसततावगमक्षमस्य
स्वस्याग्रसीम्नि निजगानकलां समस्ताम् ।
व्यङ्क्तां निषक्तमतिभि: किल षट्पदैर्य-
दालोक्य रम्यमदधान्मुदमाञ्जनेय: ।। 62

धीरोऽञ्जनाकलितसौहृददृप्तचित्तो
[3]वीरस्सचित्रकरवालविजृम्भितश्री: ।
मन्दं निजाकृति[4]विर्धर्षितमेघमार्ग:
स्तम्भेरमेन्द्र (इ)व त(द्वन)माविवेश ।। 63

तत्र (प्रतिक्षि)तिरुहं क्षितिगर्भजाता
मन्वेषयन् मिलितरामरुचि प्रकर्षाम् ।
तामादरेण मणिमापतितां कराग्रा-
[5]द्विष्वङ्नचाप स समीरसुतस्सुवीर: ।। 64

---

1. छाम्पेय 2 शैत्यप्रदायि 3. वीरस्यचित्र 4. विर्धर्षि...मेषुमार्गं
5. द्विष्वक्त्वचाप समीरसुतस्सुवीर: ।

यत्रावि(रा)स शुकसल्लपनं पिकानां
यत्रोदभूत्कलकलो लतिकाश्च यत्र ।
गत्वा स यत्नमचिराय स तत्र तत्र
वैदेहराजतनयां मृगयाञ्चकार ॥ 65

एकत्र शाखिनमलोकत शिंशुपाख्यं
प्रांशुप्रकाण्डफलपल्लवपुष्पधन्यम् ।
छायातिशीतलतलं चलितालिजाल-
मक्षणोरुपायनमिव स्थितमाञ्जनेयः ॥ 66

अत्रान्तरे सुशकुनान्यभवन्ननेका-
न्येतन्महीरुहतले निवसेदवश्यम् ।
[1]विश्वम्भरातनुभवेति विचार्य वायु-
जातः पितेव समभूच्छदनेष्वदृश्यः ॥ 67

तामिस्रपक्षसमये परिदृश्यमानां
रेखां विधोस्तनुमिवाविशदांशुकान्ताम् ।
तत्र स्रवन्नयनवरिहिमां हनूमान्
रामोक्तलक्षणयुतां स ददर्श सीताम् ॥ 68

तां मैथिलेन्द्रतनयां तनुमूर्तिमेक-
वेणीधरां विवलमानविलोचनाब्जाम् ।
निःस्वत्ववानिव निधिं निजभाग्य[2]योगात्
नेत्रातिथिं निरमिमीत समीरजातः ॥ 69

आमोदतोदमिषदापतदुत्पपात
पर्यभ्रमीत् परिलुलोक ननाट [3]रीत्या ।

---

1. विश्वभरा 2. योगत् । 3. रीत्ये ।

प्रातिष्ठत प्रववृधे [1]व्यवहारगर्जं
संगायते स्म स जहास दधाव[2]तस्थौ ।। 70

आलोकते स्म हरितस्तरुमारुरोह
वालं लिलेह [3]लपनं विववार सोऽयम् ।
हस्तौ न्यकुञ्चयदमुञ्चत हर्षबाष्प-
मक्षिभ्रुवं चलयति स्म भुजावधौषीत् ।। 71

वक्त्रश्रिया स्वसखितां परिकल्पयन्त्या
धात्रीभुवः प्रचुरदैन्ययुतामवस्थाम् ।
सन्द्रष्टुमक्षममना इव शीतभानु-
रस्ताद्रिमस्तकमहास्त शनैस्तदानीम् ।। 72

ध्यायन्नथो दशमुखो धरणीतनूजां
कन्दर्पवीतविशिखैः कलुषीकृतात्मा ।
उत्थाय यौवतकरस्थितदीपिकाभि-
रादीपयन् दिशमशोकवनं विवेश ।। 73

सोऽयं प्रविश्य सुकुमारतरैर्वचोभिः
पृथ्वीसुतां निशिचरप्रभुरन्वनैषीत् ।
अत्याकुलाऽथ तृणमन्तरतो निधाय
सैषा रुषाऽतिपरुषां गिरमावभाषे ।। 74

तस्या विदेहजनुषः परुषैर्वचोभिः
सन्तप्यमानहृदयः स निशाचरेन्द्रः ।
तद्भर्त्सनाय तरसा तरसादनस्त्री-
राज्ञाप्य [5]सौवमवरोधगृहं जगाहे ।। 75

1. व्यवहार गर्जं 2. तस्था 3. वपनं 4. सावमवरोधगृहं ।

क्रूराः कडारचिकुराः कुटिलाः कराला
विग्रा विघूर्णितदृशो विरदा विकीर्णाः ।
प्रायेण तां निशिचरप्रमदा [1]मदान्धा
नेतुर्निदेशवचसा निरभर्त्सयन्त ।। 76

निर्भर्त्स्य निष्ठुरगिरा निकटे वसन्ती—
र्निद्रार्धमीलितदृशो निकषात्मजस्त्रीः ।
दृष्ट्वा तदा मनसि साहसकर्म कर्तु-
मुद्योगिनी सुशकुनैर्मुमुदेऽथ सीता ।। 77

वेलेयमित्यनुकलं मनसा विमृश्य
वृक्षाग्रमध्युषित एव विवेकधन्यः ।
रामस्य वृत्तमखिलं निमिराजपुत्र्याः
हर्षप्रदायि हनुमान् शनकैरगासीत् ।। 78

अस्मादथ क्षितिरुहादवरुह्य मन्द-
मात्मानमग्रमुपयान्तमवेक्ष्य भीताम् ।
सीतां रघुप्रवरलक्ष्मणकीर्तनैस्ता-
माश्वास्य मारुतसुतोऽन्तिकमाससाद ।। 79

आसाद्य हृद्यतरमम्बुधिकाञ्चि[2]पुत्र्यै
सुग्रीवसख्यमपि सालविभेदनञ्च ।
वालिच्छिदामपि वदन्नभिवाद्य तस्यै
रत्नाङ्गुलीयकमदत्त [3]मरुत्तनूजः ।। 80

दत्तं तदा हनुमता धरणीतनूजा
रत्नाङ्गुलीयकमसौ रघुपुङ्गवस्य ।

1. मदान्दा; 2. पुत्रै 3. मरुत्तनुजम् ।

मूर्तीभवन्तमनुरागमिवानुवारं
निध्याय सौहृदपदं निजगाद हृष्टा ॥ 81

आयातमत्र रघुवीरकरावमर्शं
त्यक्त्वेति रागभरमात्मनि मा कृथास्त्वम् ।
रत्नाङ्गुलीयक वितर्कय रत्नगर्भा-
गर्भोदयात् सहजरागमनूनमेव ॥ 82

कैश्यं प्रसाधयति मे दयिते करेण
तद्व्यापिनी तव रुचिः तरुणेन्दुभूषे ।
स्वोन्मेषतो नवनवोदयरागहृद्ये
ते द्वेऽवधाय तनुते स्म[1]समानमूर्तिम् ॥ 83

रामोदयक्षितिधरादुदयं श्रितस्य
रत्नाङ्गुलीयक तवागमतोऽरुणांशोः ।
आसीद्विलोचन सरोरुहयोर्विकासे
बोधोऽजनिष्ट समभून्मम सुप्रभातम् ॥ 84

काकुत्स्थवंशतिलकस्य करावलम्बं
सन्त्यज्य [2]दूरमधुना समुपागमस्त्वम् ।
उद्वीक्षितुं निशिचरीभिरुपप्लुतां मां
साहाय्यकं विपदि यः कुरुते स बन्धुः ॥ 85

अस्नेहदीपवदभीक्ष्णमदीप्यदास्यं
[3]रात्रौ वने मम रघुप्रभुणा वसन्त्याः ।
सस्नेहदीपवदिहाद्य समग्रमक्ष्णो-
रान्ध्यं निवारयसि हन्त रूचां प्रचारात् ॥ 86

---

1. समानमूर्तिः 2. दूरमधुन 3. रात्रावने ।

एकाधुना [1]हृरिदयोपगतोर्मिके त्व-
त्सन्दर्शनात्प्रभवतो मम हर्षसिन्धोः ।
पारम्परीं प्रथयसे वरमूर्मिकाणां
प्रस्तौमि किं नु महिमानमहं भवत्याः ॥ 87

मुक्तास्रजो मम मुहुर्लुलिताः कुचाग्रे
सम्यक् प्रभौ सति वितन्वति तत्र तत्र ।
सक्तास्त्वदीय[2]सुषमा नवपद्मराग-
संस्यूतमौक्तिकसराणि वितन्वते स्म ॥ 88

केलीवने किसलयाहरणं विधात्र्यां
पत्या समं मयि लतासु तवोन्मिषत्याः ।
भासा प्रवालनिकरभ्रमतो भ्रमन्त्यां
सोऽयं जहास तदहं किमु विस्मरामि ॥ 89

भव्यां विहाय भरतो मणिमुद्रिके त्वां
साम्राज्यपालनसमञ्जसताप्रकारे ।
पादूद्वयं रघुपतिं प्रणयाद्य (या)चे
किं नु स्तवीम्यहह तत्कलितोपकारम् ॥ 90

रत्नाङ्गुलीयकमिति ब्रुवती धरित्री-
पुत्री समीरणभुवं परिकीर्तयन्ती ।
[3]भित्त्वा दशास्यमिषुभिर्यदिमां ग्रहीता
रामस्तदौपयिक (मस्य क)देत्यवादीत् ॥ 91

तेनाञ्जनातनुभुवाथ रघूद्वहस्य
विश्वासदं वितर चिह्नममूल्यमित्थम् ।

---

1. हृरिदयोपगतोर्मिले 2. [illegible] 3. भित्त्व ।

सम्प्रार्थिता निमिसुता वसनाग्रबद्धं
चूडामणिं चुलुकितार्कघृणिं व्यतारीत् ॥ 92

एवं वितीर्य मतिमन् हनुमन् (मुदा) तं
राकासु (पर्वतज) धातु रसात्कपोले ।
पत्रावलीविरचनं च ममाभिधेहि
प्रज्ञानमीशितुरिति क्षितिजाऽऽचचक्षे ॥ 93

पाणिद्वयेन परिगृह्य शिरोमणिं तं
सीतां प्रणम्य शुभदैर्वचनैरमुष्याः ।
संवर्धितोऽथ स ततो हनुमान् प्रयातः
सन्दर्शनीयमुरु शौर्यमिहेति दध्यौ ॥ 94

पर्याकुलच्छदकुलं पतितप्रसूनं
पर्यस्तपल्लवफलं प्रविभिन्नशाखम् ।
आकीर्णसारघमशोकवनं विशङ्कं
चण्डेन तेन हरिणा परिणाहि चक्रे ॥ 95

तस्मिन् वने त्वरितमुत्पततां खगाना-
मव्याहतः कलकलोऽस्पृशदन्तरिक्षम् ।
शंसन्नमुष्य भुजशौर्यमुदात्तजैत्र
निस्साणराण इव मारुतनन्दनस्य ॥ 96

व्याप्तेन तत्कलकलेन विबुद्ध्य सद्यो
रक्षःस्त्रियो दशमुखाय विदेहपुत्र्या ।
सम्भाषणं वनविभञ्जनमप्यशेषं
वृत्तं समीरणभुवो [1]न्यगदन्विषण्णाः ॥ 97

1. न्यगदद्विषण्णाः ।

एतन्निशम्य कुपितेन दशाननेन
सम्प्रेषितान् [1]द्रुतमशीतिसहस्रसंख्यान् ।
रक्षोभटान् रणमुखे प्रतिघाज्जघान
झंझानिलो जलधरानिव वायुसूनुः ।। 98

तानुद्धतान् निशिचरान् प्रविभिद्य चैत्यं
हर्म्यं हठेन दलयन् हनुमान् [2]तदीयम् ।
स्तम्भं विधाय परिघं बहुभिर्निशाटै-
स्तोषाद्युयुत्सुरथ तोरणमाससाद ।। 99

रामो जयत्यतिबलः सह लक्ष्मणेन
राजा च भानुतनयो रघुवीरगुप्तः ।
तद्दास एष हनुमानहमाहवाग्रे
तुल्यं न रावणशतं च ममेत्यगर्जीत् ।। 100

हर्म्याहतिश्रवणतः कुपितेन तेन
सम्प्रेषितो दशमुखेन ततो धनुष्मान् ।
आगात् प्रहस्ततनयो युधि जम्बुमाली
तं जम्बुकार्भकमिव ह्यवधीत् स धीरः ।। 101

रक्षःपतेरधिगतान् वचनेन पञ्च
सेनाग्रगांस्तदनु सप्त च मन्त्रिपुत्रान् ।
[3]प्राणानपास्य पवमानभवस्समित्या-
मङ्गानि चैव परिघेन जघान [4]वीरः ।। 102

निर्जित्य तान् निशिचरान् निखिलान् बलाढ्यान्
नर्दन् पराक्रमनिधिः स विधित्सुरन्यैः ।।

---

1. क्रुदितमशीति 2. तदीयम् 3. प्राणानपास्य 4. वीरः ।

आयोधनं पवनभू[1]रचिराय भूयोऽ
प्यासाद्य तोरणमथ प्रमना बभूव ॥ 103

रक्षःपतेरनुमतेर्द्रुतमापतन्त-
मक्षां कुमारमवलोक्य रुषाऽरुणाक्षम् ।
अक्षं रथस्य हनुमानमुमप्यमथ्ना-
दक्षं किमक्षजयिनो जगति क्षमन्ते ॥ 104

क्रुद्धस्य पंक्तिवदनस्य ततो निदेशा-
दायान्तमायतशरासधरं रथाग्रे ।
इन्धानमिन्द्रजितमिद्धतनुर्हनूमान्
गर्जन् ददर्श गतभीर्मघवेव वृत्रम् ॥ 105

आगत्य घोरशरवृष्टिभिराशरेन्द्र-
पुत्रस्तमस्थगयदद्रिमिवाम्बुवाहः ।
व्या(पा)यतास्य पथि वाल(बलो)हनूमान्
जन्यं स तेन जगतां भयदं वितेने ॥ 106

ईदृक्प्रचण्डबलमिन्द्रजिदाञ्जनेयं
पश्यन्नवध्य इति तं प्रवितर्क्य [2]भीतेः ।
ब्रह्मास्त्रतोऽथ स बबन्ध[3]स चेशिताऽपि
पाशेन[4]नाग इव तेन बभूव बद्धः ॥ 107

तत्सन्दितं हरिजितो वचसा समीर-
जातं निशाचरभटा[5]श्चणपाशजालैः ।
बाढं बबन्धुरथ [6]तत्प्रययौ स जान-
न्नेतन्निबद्ध इव तद्वशतां प्रपेदे ॥ 108

---

1. रंनिराय 2. भीते 3. सवेक्षिरापि 4. सा...वत्तेन 5. श्छण 6. तत्प्रययो ।

तूष्णीं दशाननविलोकनकाँक्षया त-
मायात[1]माशरभटा द्रुतमानयन्त ।
आनीतमेतमवलोक्य स रावणोऽपि
क्रुद्धं पुरा मनसि नन्दिनमेव मेने ।। 109

किं न्वद्य कारणमिहागमनस्य भिन्नं
केलीवनं किमिति पृच्छ तमेनमेवम् ।
रक्षोऽधिपेन गदितोऽग्रगतः प्रहस्तः
पप्रच्छ तं पवनभूरपि भाषते स्म ।। 110

राजाऽभवद्दशरथोऽत्र तदीयपुत्रो
रामोऽनुजेन वनमाप समैथिलीकः ।
ताताज्ञया रविभुवा स चकार सख्य-
मेकेषुणा झटिति वालिनमाजघान ।। 111

तत्किङ्करोऽहमनिलप्रभवो हनूमा-
नत्रागतो मृगयितुं मिथिलेन्द्रकन्याम् ।
तां दृष्टवांस्तव वने क्षितिजां वितीर्य
श्रीरामभद्रचरणं शरणं भजस्व ।। 112

श्रुत्वा वचो हनुमतः कुपिते दशास्ये
तद्दण्डमादिशति दूतजना न वध्याः ।
वालस्य निग्रहणकृत्यममुष्य युक्त-
मित्यब्रवीन्नयविदेष विभीषणोऽग्रे ।। 113

तच्छासनादथ मरुत्तनयस्य वालं
[2]संवेष्टय जीर्णवसनैश्चणवल्कलैश्च ।

1. माशरभटान् 2. संवेष्ट्य ।

तत्रानलं ततशिखं [1]ज्वलयत्सु रक्षो-
योधेषु तानभिजघान रुषा हनूमान् ।। 114

उत्प्लुत्य सोऽथ हनुमान् दशकन्धरस्य
हर्म्येषु हेमभवनेषु शिरोगृहेषु ।
चिक्षेप पावकशिखां विशिखासु चासौ
त्यक्त्वा विभीषणगृहं जनभीषणात्मा ।। 115

व्याप्तः स वह्निरभितो नगरीं त्रिकूट-
कोटिस्थलेषु शतकोटिशिखीव वन्याम् ।
दावानलार्चिरिव गाढतरं दिदीपे
शर्वालिकाग्निरिव सर्वजनेषु चोग्रः ।। 116

सोऽग्निः स्वकीयशिखया ग्लपिताशयानां
नक्तंचरेन्द्रनगरीवनिताजनानाम् ।
श्वासानिलैः प्रववृधे शतधा समृद्ध-
मग्रे ततस्तु नयनाम्बु तदाऽविरासीत् ।। 117

अग्निर्दशाननभियेन्द्रमसौ द्रवन्तं
[2]धृत्वा कृशा इति वितर्क्य समग्रधूमैः ।
रामाहवोत्सवमवेक्षितुमायियासो-
र्वाहान् पुपोष किमु तस्य तदा पयोदान् ।। 118

हाहेति विष्वगतिमात्रविलापभाजां
[3]विस्रस्तकैश्यतमसां रजनीचराणाम् ।
सर्वत्र नीलिमभरेण समुत्थितेन
तस्यान(ल)स्य ववृधे नरधूमरेखा ।। 119

1. जलयत्सु 2. धृत्व 3. विस्रस्तकैश्यतमसो ।

आलोकितुं हनुमतो [1]बलमस्य लेखा
नाकौकसो दिवि निलिम्पनदीप्रतीरे ।
पीत्वापि पावककरस्थिततालवृन्त-
मन्योन्यमेतदभिताप[2]जुषोऽग्रहीषुः ॥ 120




अस्यानलस्य दृढमर्चिरगारसीम्नि
प्रत्यग्रपल्लवचयान् रचयांचकार ।
व्यक्तीचकार वनराशिषु वर्धमानं
पारम्परीं प्रचुरविद्रुमवल्लरीणाम् ॥ 121

आक्रन्दनानि रजनीचरभामिनीनां
गन्धर्वहेषितरवान् गजबृंहितानि ।
कृत्वा वियत्सपदि शब्दगुणं समीर-
सूनोः शशंसुरिव शौर्यगुणं सुरेभ्यः ॥ 122

एवं प्रसर्पति हविर्भुजि चिन्तयित्वा
सीता तदाऽनलभवे शिशिरो भवेति ।
तस्यार्थनामकृत तन्मधुवाक्सुधाभिः
श्रीखण्डसार इव शीतलतां स भेजे ॥ 123

एवं दशाननपुरीं बहुधा विधाय
वालं निमज्ज्य वनधौ वसुधासुतायाः ।
क्षेमं च चारणमुखादवकर्ण्य सीतां
दृष्ट्वा ननन्द दिविषत्प्रणतो हनूमान् ॥ 124

---

1. बलमस्यपिता  2. जुषोग्रहीषुः ।

संप्रेषितः क्षितिभुवा सरितामधीश-
मुल्लङ्घ्य मारुतसुतस्त्वरयोपयातः ।
सीतामपश्यमिति वालिकुमारमुख्या-
नाख्याय तान्[1]कपिवरान् मुदितानतानीत् ॥ 125

संपूज्य तं [2]वनचरास्सकलास्सवेग-
मागत्य पत्युरथ वालिभुवो निदेशात् ।
माद्यत्पिके मधुवने भवने फलानां
माध्वीकसारमहरन् विहरन्त एव ॥ 126

तैस्ताडिते दधिमुखे (निखिलं) कपीनां
दौष्टयं वदत्यवनिजामनवेक्ष्य नैवम् ।
कुर्वन्त्यमी हनुमता कृतमेतदित्थ-
मम्भोजमित्रजनिरात्मनि निश्चिकाय ॥ 127

अथ किलकिलाशब्दः शब्दग्रहातिथिरुद्ययौ
वनचरवराः साकं तेनैव वायुतनूभवम् ।
[3]सपदि पुरतः कृत्वा सर्वेऽपि सम्मदवर्मिताः
सविधभुवमाजग्मुस्तिग्मद्युतेस्तनुजन्मनः ॥ 128

सुग्रीवेण शुभंयुनैव सुधिया सन्दर्शिता वानरा-
स्सीतादर्शनमब्रुवन् रघुकुलश्रेष्ठाय सर्वे ततः ।
अब्धेर्लङ्घनमब्धिकाञ्चितनयासन्दर्शनं साधु त-
द्वृत्तं च न्यगदीत्स विस्तरतया धीमान् हनूमान् मुदा ॥ 129

अर्थव्यक्त्यवलम्ब[4]चम्पुरचनाधौरन्धरीधन्यया
देव्योद्यन्मतिसख्यया मधुरवाण्यम्बाख्यया निर्मिते ।

1. कविवरान् 2. वनचरास्यकलास्यवेग 3. सपधि 4. चम्बुरचन ।

श्रीरामायणसारनामनि महाकाव्येऽतिभव्ये सुधी–
वर्गस्तोत्रपदे चतुर्दशतया सर्गः प्रशस्तोऽभवत् ॥ 130

इति श्रीरामायणसारकाव्यतिलके

चतुर्दशः सर्गः




## गमनिका

इतः परं मूलपुस्तके 10 पत्राणि न सन्ति; (लुप्तानि) (115–125) ततः 126 तमं, 129 तमं, ततः 140 तमं च पत्रं शिथिलं दृश्यते। ततः परं ग्रन्थभागो नोपलभ्यते ॥

..................................काम
माभाषते स्म विनयादथ कुम्भकर्णः।
नक्तंचरेन्द्रनलिनासनवंशजात
युक्ता किमन्यवनिताकलितास्पृहा ते ॥ 57

सेतुं विनिर्मितवतो जलधावगाधे
वीरस्य तस्य महिमा विदितो न किं ते।
अत्र प्रहस्तमुखसर्वनिशाचराणा-
मायोधने हननमीक्षितमेव लोकैः ॥ 58

नीतिं विचिन्तय रुषं विजहीहि लंकां
त्रायस्व सर्वविभवानुपभूंक्ष्व शश्वत् ।
काकुत्स्थपुंगवकलम्बसमागमात्प्रा-
गुर्वीसुतामपहृतामुपदां विधेहि ।। 59

इत्युक्तिभिः प्रकुपितेन निजाग्रजेन
संप्रेषितं चरणलंघितगोपुराग्रम् ।
तं कुम्भकर्णमुपयान्तमुदग्रशूलं
दृष्ट्वा पलायिषत दीर्णहृदः कपीन्द्राः ।। 60

याभीष्टक्लुप्तैव[1]बिभीषिकैषा
दशानननेति निगद्य सर्वान् ।
न्यवर्तयन् नीलनलर्षभादी-
नथाङ्गदो भङ्ग्युतान् प्लवङ्गान् ।। 61

शरभऋषभमैन्दजातवेद-
स्तनयमुखा निखिला वलीमुखास्ते ।
निबिडतररुषा निवर्तमाना-
स्सममथ तेन वितेनिरे समीकम् 62

शूलेन मारुतसुतं बिभिदे पदाभ्यां
नीलं जघान ऋषभं परिषस्वजे सः ।
मूढं चाकार ऋषभं दृढमुष्टिघातै-
श्चक्रे चपेटपतितं च मृधे गवाक्षम् ।। 63

(असमग्रम्)

—०—

1. बिभीषिकैष ।

